# उत्तरसीताचरितम्

उत्तरे सीताचरिते दशसर्गात्मकं महाकाव्यम्


रचयिता

**रे वा प्र सा द - द्वि वे दी**

सनातनः



प्रकाशकं

**का लि दा स सं स्था न म्**

**वाराणसी–५**

● सनातनग्रन्थावली Complete Works of Sanātana

ग्रन्थाङ्कः—१ Volume 1

भागः—१ Part 1

● उत्तरसीताचरितमहाकाव्यम्

UTTARASĪTĀCARITA

An Epic of 10 cantos

● भारतशासनस्य शिक्षाविभागः, श्रीगोविन्ददेवजीन्यासः ( कलकत्ता ) इत्यनयोः आर्थिकेन साहाय्येन प्रकाशितम्.

● षष्ठं परिष्कृतं संस्करणम्

● प्रकाशनवर्षम् १९९० ई०

मूल्यम्



प्रकाशकः
सदाशिवकुमारद्विवेदी
सचिवः
कालिदाससंस्थानम्
२८, महामनःपुरी, वाराणसी–२२१००५
दूरभाषः : ३११८८२

Publisher
S. K. Dwivedi
Secretary
Kalidasa Academy
28, Mahamana Puri, Varanasi–221005
Phone : 311882

मुद्रक :
आनन्दकानन प्रेस
टेढ़ीनीम, वाराणसी
फोन : ६२०५०

Printer :
Ānandakānana Press
Thedhineem, Varanasi
Phone : 62050

# प्रकाशकीयम्

'उत्तरसीताचरित'नाम्नः सीताचरितस्यास्य १–५ सर्गाः पितृचरणैः काशीहिन्दू-विश्वविद्यालयस्य रुइयाछात्रावासे १९५४ वर्षे संदृब्धाः। नरसिंहगढे प्राध्यापकत्वेन कृतस्थितय एते तमेतं सर्गबन्धं यावत् परिपूरयन्ति तावदेव रायपुरस्य संस्कृतमहा-विद्यालये प्रेषिताः। तत्र १९६८ वर्षे दशभिः सर्गैः प्रथमं शोणितसंभवीयम् इति नाम्ना पश्चाच्च सीताचरितनाम्ना परिपूरयामासुः सर्गबन्धमिमम्। परिपूर्त्तेस्तिथिः सीता-चरितस्य पितृचरणैः स्वयमेव लिखिते पाण्डुग्रन्थे १०.२.६८' इति। इदमेव हि काव्यं जानकीमोचननाम्नाऽपि दत्तविवरणं संस्कृतप्रतिभाया १.१. अङ्के। ११८ पृष्ठा-त्मिका पाण्डुलिपिरियं कालिदाससंस्थानस्य ग्रन्थागारे सुरक्षिता विद्यते। अथापराप्येका पितृचरणैरेव स्वयं लिखिता पाण्डुलिपिः काव्यस्यास्य संस्थानस्यास्य संग्रहे विद्यते यस्यां काव्यमिदं 'शोणितसंभवीयमि'ति प्रतिपत्रमुददिश्यत, उददिश्यत च 'प्रजावती'-ति, 'उत्तरसीताचरितमि'-ति च। अन्याप्येका कप्पिकास्ति सुलभा यत्र १–५ सर्गात्मको भागो लिखितः। अत्र तिथिः २५.७.१९५४। आभिर्मातृकाभिः पाठभेदस्य नितान्तं वैज्ञानिकी गाथा समुन्मील्यते। सन्त्यासु भूयांसः पाठभेदाः। तानधिकृत्य कवेः प्रतिभाया क्रमिकं परिवर्त्तनमपि शक्यत एवोत्प्रेक्षितुम्। मूलपाठः प्रस्तुतेऽपि संस्करणे बहुत्र परिवर्त्तितः स्वयं पितृचरणैरेव।

इदं हि परिष्कृतं संस्करणं सीताचरितस्य। १९६८ वर्षे सागरिकाया ७.१ अङ्के प्रकाशितात् प्रथमात् संस्करणात् परं १९७५ वर्षे मनीषाप्रकाशनादस्य द्वितीयं, ततः परं चौखंभासंस्कृतप्रकाशनतस्तृतीयं, कानपुरस्य ग्रन्थमित्याख्याच्च संस्थानात् चतुर्थ-पञ्चमे संस्करणे प्रकाशमापुः। तदिदं सीताचरितस्य षष्ठं संस्करणम्।

इदं हि भारतशासनस्य शिक्षाविभागः कलिकातास्थस्य श्रीगोविन्ददेवजोन्यास इति संस्थाद्वयस्यार्थिकेन साहाय्येन प्रकाश्यते। कृतज्ञमेतदर्थं कालिदाससंस्थानम्।

मुद्रणकार्यमस्यानन्दकाननप्रेसस्वामिनां श्रीविश्वम्भरनाथद्विवेदिनां तदात्मज-रत्नयोः श्रीसोमदत्तशिवदत्तद्विवेदिनोश्चासाधारणेन सहयोगेन संपन्नमिति तेभ्यः कृतज्ञतां प्रकाशयामि, एतस्य सर्वस्यापि प्रकाशनयज्ञस्य पूर्त्तौ मातृचरणाः पूज्यश्री-द्रुपदकुमारीमहोदयाः नितान्तमेवौदार्यं दर्शयन्ति, दर्शयन्ति च तथैवौदार्यातिशयं कला-मर्मज्ञा आदरणीया विमलादेवीपोद्दारमहोदयाः। आभ्यः प्रणम्य प्रसीदामि सनातन-ग्रन्थावल्या महाकाव्यात्मकं प्रथमं भागं प्रकाशितं वीक्ष्य।

१३-६-९०

सदाशिवः

# आशिषः

**१. डॉ० सुनीतिकुमारचटर्जी**
नेशनल प्रोफेसर ऑफ इण्डिया, कलिकाता

श्रीमन्तो रेवाप्रसादद्विवेदिनः प्रीतिनमस्कारपुरस्सरं विज्ञाप्यन्ते यद् भवतां"""सीताचरितं"""नाम काव्यं सम्प्राप्तम्। सीतादेवी अन्वर्थनाम्नीति संचिन्त्य भवद्भिः पतिव्रताश्रेष्ठाया भारतीयस्त्रीणामादर्शभूताया रामदयितायाः सीतायाः कृषिविवर्धिनीरूपं कल्पितमिति मन्ये। केनापि लघुभावेन कविरवीन्द्रनाथेनापि पुरा एवंविधो भावः प्रकटित आसीत्।""। अस्मभ्यं चिरागतो विचारः समधिकतया रोचते।

देवभाषायां भवताम् अधिकारमवलोक्य वयं सर्वे नितरां विस्मितप्रीताः स्मः। भवतां सावलीला शैली, व्याकरणच्छन्दःशास्त्रानुमोदिता विशुद्धा रीतिः, भावगभीरता, अलंकारप्रयोगनिपुणता—एते सर्वे गुणाः सर्वथा विदुषां प्रमोदाय सन्ति। माता सरस्वती भवतां रसनाग्रे नरीनृत्यति।""। एतदर्थमस्माकं हार्दिकमभिनन्दनम्। भवतां शुभानुध्यायी काश्यपः

१५. ७. १९६९ **श्रीसुनीतिकुमारशर्मा**

**२. डॉ० चिन्तामणिः** President
**द्वारकानाथः देशमुखः** **INDIA INTERNATIONAL CENTRE, DELHI**

Thank you for sending me a complimentary copy of your Sitacaritam. I have gone through it with much interest and appreciation.

The theme is well chosen and its presentation is competent. I think you have portrayed Sita as a more living and noble-souled character than Kalidas in his 14th Sarga of Raghuvansha

The 7th, 8th, 9th, and 10th Sargas are uniformally good, I think.

You have a number of striking Arthantaranyasas. In the 3rd Sarga verse 10, the Shlesha on Sneha makes it particularly pleasing.

With best wishes,

[ सीताचरितार्थे धन्यवादः। अनुशीलितमिदमारम्भतोऽन्तं यावत् सरुचि सावबोधं चास्माभिः। अत्र निर्वाचितं कथावस्तु तदुपस्थापनं च शोभने। भवतां सीता कालिदास-सीतातोऽधिकं सप्राणा समधिकमुदात्ता च।

७–१० सर्गाः समानतया रुचिराः। अर्थान्तरन्यासा भवतां हृदयस्पर्शिनः। ३।१० पद्यगते स्नेहपदे यः श्लेषः स च समधिकं चमत्कारी। एतदर्थमस्माकमुत्तमाः शुभाशंसाः—चिन्तामणिदेशमुखः ] July 3, 1969

## मुखबन्धः

पितुर्नियोगाद् वसुधां सुधामयीं
विहाय यो यौवनलाभनिस्पृहः ।
अतन्द्रितः श्रेयसि काननं ययौ
स शास्तु सत्प्रेयसि मानवं द्विजः ॥

अथेदमुपच्छन्दयामहे सीताचरितं नाम सस्वोपज्ञसंकेतं महाकाव्यम् । इदं हि सीतामातुरुत्तरं चरिमुपढौकते । अत्र सीता करुणैकपात्रं नास्ति । तपोमहिष्ठानां महामुनीनां शोणितादर्जितौजोज्योतिः (३।४६), सर्वंसहाया भगवत्याः पृथिव्या अधिगतवपूरत्ना (७।८), महायोगिनो विदेहादासादितविनययोगा (५।१२), बुद्धि-प्रधाने विवस्वदन्ववाये (९।४१) च वधूभावेन चतुर्दश-वत्सर-स्वेच्छावाप्तवनवास-परीक्षित-पतिव्रत-रुक्ममुद्रा सा नितान्तमेवोदात्तचेताः । शैशवादेव परिशुद्धनाडिका-चक्रोद्वासितासुस्थभावतया (६।४४, ४५) याथार्थ्येन स्वस्मिन् स्वायत्त-स्वामिभावा (६।४५) सा प्रथमप्रसवावसरादपि नागजातिरिव किं नु भीषितान्तरा जायेत । एवं चाविषय एवेयं करुणामात्रपात्रतावधीरणायाः ।

इहेयं पट्टमहिषीत्वेन भगवतो रामस्य राजसिंहासनमधिश्रयाणापि (१।६८), कौलीनज्वलनाद्[१] रामस्य कीर्तिपताकामवितुं (३।९), स्वत एव स्वकीयमेव वनवासं प्रस्तवीति (३।९), भरत-कौसल्यादीनां रामबन्धूनामध्यक्षमेव च लक्ष्मणेरितरथा (३।६०), स्वभगिनीर्गृहमेधितायामेव विनियोज्य (४।६८), षाट्कौशिक-काय-सहायैव वनमेति । तत्रैव भागीरथीपरिसरे वनौकोभिरुपसेव्यमानेयमक्लेशेनैव प्रसूत-सुत-मिथुना रामायण-कविना कृतानुरोधा (५।७०), तदीयमाश्रपदमाश्रयति । तत्र पालितपुत्रा[२] तस्मा एव सुकवये, प्रतिभेव शब्दार्थौ (७।४१, ८।१) पुत्रौ प्रतिपादयति । विनीतपुत्रा कृतात्मलाभा च तेनैव महाकविनायोजितायां रामजनकादिसभाजितायामाश्वमेधिक-सैन्य-जनसंसदि[३] साकेताय ससैन्येन लक्ष्मणौरसेन चन्द्रकेतुनातितरामनुरुध्यमानापि (१०।५८, ५९), जीवनस्य कृत्यशेषमनुपलक्ष्य (१०।६५), युक्तयोगीवापुनरुत्थानं समाधिबन्धमाबध्नाति (१०।६६) । ततश्चाऽगतासुतयाऽनपेक्षिताग्निसंस्कारा व्युत्थानशून्यतया चानवशिष्टलोकयात्रा सा समुदाचारमनुपालयद्भिस्तैरेव महा-मुनीन्द्रैः सप्रणामं भूगर्भसमाधिमारोप्यते (१०।७७), अयमेवास्याः सुप्रतीतः पृथिवीप्रवेशः । एतावन्मात्रमत्र वस्तु । एतच्चात्र व्यवसिततमताया युगे समासमेव साधुमनुवीक्ष्य—

---

१. द्वितीय सर्गः । २. षष्ठः सर्गः । ३. नवमः सर्गः ।

१–राष्ट्रपतिनिर्वाचनम् २–जानकीकौलीनम्
३–जानकीपरित्यागः ४–साकेतपरित्यागः
५–कुमारप्रसवः ६–जानकीमुनिवृत्तिः
७–विद्याधिगमः ८–कुमारायोधनम्
९–मातृप्रत्यभिज्ञानम् १०–समाधिमाङ्गल्यं चेति-नामभिर्दशभिरेवानतिविस्तरैः ६९४–संख्याकश्लोकशुभैः सर्गैरद्वैतपर्यवसायितयोपनिबद्धम्। अस्ति च मङ्गलान्तमिदम्, प्रधानपात्रस्य ब्रह्मानन्दामृतोदन्वन्निमग्नत्वात्, अप्रधानेषु च विद्यमानायां करुणाया व्यपदेशाप्रयोजकत्वात्।

अस्य लघीयसोपि वस्तुनः परिबृंहणमपि न नात्र सारभूतम्। तत्र हि लब्धजीविता सांप्रतिकी स्वाराज्यनीतिः ( ४।४१ ), अधिगतोत्तराः प्राचीना यज्ञविद्यादिपारिपार्श्विकाः प्रश्नाः ( ८।१५, ९।२० ), दर्शितनूतनार्थश्च नरमेधः (६।१५ ), शिष्टता ( ६।३२ ), कवित्वम् ( ५।३१ ), भारतीयता ( ९।६ ), जीवनमुक्तिः ( ६।१३ ), कुशलता ( ६।२० ), जृम्भकोदयः ( ८।३३ ), वाल्मीकित्वम् ( ५।३२ ), दाम्पत्यम् ( ३।४९ ), प्रेमतत्त्वम् ( ३।१९ ), कविभूमिः ( ६।२१ ), इत्येवमादयो विषयाः। अत्र हि प्रमाणीकृतं प्रमाणत्रयम् ( २।३०, ९।१० ), प्रसाधितं पुरुषार्थचतुष्टयम् ( २।७ ), श्रद्धितं श्रुतिप्रामाण्यम् ( ९।१० ), प्रत्यायिता वर्णाश्रमव्यवस्था ( ८।५, ५०, ६० ), समन्वितं ज्ञानकर्म-भक्ति-योगत्रयम् ( १०।४६ ), निःश्रेणीकृतं वेदान्त ( ८।५७, ०।५५, ६९ )-सांख्य-( २।४३ )-शैव-( ६।१४ )-प्रभृति दर्शनजातम्, प्रबीजायितं च स्वायत्तता ( १०।२२ )-महाकरुणा ( १०।४४ )-विश्वशान्ति-( १०।४६ )-सामरस्य-( १०।४६ )-महामाङ्गल्या-( १०।७५ )दिकं तत्त्वज्ञातम्। "भौतिको रावणो लङ्कायां हतः, आध्यात्मिकस्तु प्रथमकवेराश्रम" एवेति ( ९।५९ ) निपुणता, कैकेयी हि पौलस्त्यवधनाम्नि नाटके सूत्रभृत्तया राजनयिकेषु शिरोमणिरिति ( ७।३५ ) चातुरी, कौसल्यामातुः कूटनीतिरेव सीतापरित्यागतन्त्रमिति ( १०।५४ ) कूटकल्पः, इतराश्चैवंविधा विचारक्रान्तयोऽत्र लम्भितप्रसराः, कामगवी-चिन्तामणि-कल्पवृक्ष-प्रमुखाः ( ७।१४, १५ ) प्रतीकाः, त्रिपुरा-भुवनेश्वरी-पीताम्बराद्या ( ९।५६ ) महाविद्याः, बिम्बप्रतिबिम्बभाव ( ८।५७ ) प्रकाश्यप्रकाशकभाव ( ८।६२ ) प्रत्यभिज्ञान ( ८।५८ ) काव्यात्म ( ८।६४ ) काव्यपुरुष ( ८।५८ ) कैवल्य ( ८।५७ ) रसलय ( १०।७१ ) प्रभृतयश्च संप्रदायागताः परिभाषा अत्र व्योम्नि तारा इव प्रकाममुपसंदानिता स्वारसिकतया। गङ्गा ( ५।६२ ) यमुना ( ५।४६ ) सिन्धु ( १०।२६ ) लौहित्या ( १०।२६ ) वंक्षु ( ९।६१ ) प्रमुखाणि स्रोतांसि, सिंहल १।३ ) प्रभृतीनि द्वीपानि, हिन्दमहासागर ( १।३, १०।३१ ) प्रभृतिभिर्नामभिर्व्यपदिश्यमाना महोदधयः ( १।३, ९।२० ), हिमाचलादयो ( १।२, ९।६१ ) गिरयः, त्रिविष्टप ( ९।६१ ) नेपालभोट ( ९।६३ ) प्रमुखाः प्रदेशाश्चात्र भावव्यञ्जनाया उपकरणायन्ते।

सारभूतमपि वस्तुपरिबृंहणमत्र रुचिरतासौभगं नातिवर्त्तते। तथा ह्यत्र मधु-समय-सूर्यचन्द्रोदयास्तमन-तपोवनप्रभृतीनि वर्णनोपकरणानि सप्रवाहं सोक्तिवैचित्र्यं च तथा चित्रितानि यथा तानि स्वभावं नातिक्रामन्ति। कारुण्य ( ३।२२-२७ ) वात्सल्य ( १०।३३-३८ ) शौर्य ( ८।४२ ) प्रभृतयो भावाः, शान्ति-प्रभृतयः स्वभावाश्च रस-विच्छित्तिमुल्लासयन्ति। मार्गानुगुण्यसुभगो माधुर्यादिगुण-प्रवाहोऽप्यत्र सौभाग्यमाभि-जात्यं च न नानुरुणद्धि। अलंकारेष्वपि प्रत्यग्राणि सादृश्यानि ( १।२, ३, २।४४, ३।५७, ६१, ८।१, ६, १२, १२, १७, ४५, ५६, १०।३, ४, ८, २७ ) नवीना आरोपा ( ३।६३, १०।२९ ) अभिनवानि चार्थान्तराणि ( १।२४, २।३७, ३९, ४७, ५९, ४।२१, ३१, ४३, ६९, ७०, ५।१३, ६७, ६।५९, ६०, ७।५७, ५९, ६०, ८।३५, ६७, ७०, ९।१०, १३, १४, ३०, ३६, ३७, ५७, ६२, ६३, ६५, १०।२१, २४, ५६, ५९, ७१, ७६, ७७, ) काव्येऽस्मिन् कविकर्मणोऽपर्युषितत्वं प्रस्तुवन्ति। अन्ये चापि रूपक ( १।१९ २२, २३, २७, २९, ३५, ३९, ५१-५५, ६८, २।९, २१, ५४, ३।१, १८, ६३, उत्प्रेक्षा ( १।१५, ३७, ४०, ४२, ४५, ४८, ६२, ६८, २।९, २०, २२, ६०, ३।५५, ७।५४ ) अतिशयोक्ति ( २।३४, ३५, ५२, ३।६२, ४।४, १४, १७, १०।२५ ) दीपक ( २।३, ११ ) व्यतिरेक ( २।१२ ) प्रतिवस्तूपमा ( २।२६, ५१ ) दृष्टान्त ( २।५७, ३।६४ ) अपह्नुति ( ७।५२ ) निदर्शना ( ६।३९, ७।१०, ९।१८, १ ।३१, ३२ ) विषम ( ४।४५ ), पर्यायोक्त ( १।१, १०।३८ ) यमक ( १०।६०-६४ ) प्रभृतयोऽलंकारा अत्र काव्यश्रियमुत्सेधयितुमहमहमिकां बिभ्रति उपमाश्चानेकविधाः ( १।४, ५, ८, ९, २१, २६, २८, ३१, ३६, ४०, ४१, ४३, ४४, ४६, ५७, ५९, २।२, ८, १९, २१, ३६-३८, ४०-४२, ४९, ५०, ५३, ५६, ३।१, १९, ५४, ४।७२, ५।२-५, ७।४२-५४, ६१, ८।२, ६, ७, १०, ११, १४, ३७, ७१, ९।२, ३, ८, १८, ३९, ५०-५३, १०।३-५ )। तत्रापि साम्ययोजनायामेकदेशमात्राभिनिवेशकल-ङ्कोऽत्र निर्विषयः। निर्वाहोऽप्येषामत्र यौवने विलासादीनां, वनस्पतौ प्रवालादीनामिव वाऽपृथग्यत्ननिर्वर्तित एव। प्रतीयमानार्थपरामर्शोऽप्यत्र प्रसूने परिमल इव सर्वत्र प्राणप्रदः। अस्ति चात्र सर्वत्राप्यौचित्यमनुपहतप्राकाम्यम्।

विश्वबन्धुत्वविधृता राष्ट्रियता हि काव्यमन्दिरेऽत्र देवता। एतदर्थं—१-२, ३, २०, २१, २२, ४२, २।२४, ४-२८, ५३, ५-६६, ७०, ६-४२, ५४-५५, ५६, ६२-६७, ७० ७-८, १३, २३, ६०, ६३, ८-१३, २४, ६७, ९-२, ६, ६०-६२, १०-६, २०, २१, २२, २४, २६, ३१, ३३-३६ एतानि स्थलानि संस्कृतकाव्यसाहित्ये नितान्तमेव निष्प्रतिमानि। एष्वपि १-२, ३, २२, ६-३३, ३४, ४६, ५५, ७-१३, १०-२१, २४, एतानि स्थलानि चक्षुरुन्मीलनप्रवेकाणि, शाश्वतसदेशभूतानि, भारतीयराजनयगायत्रीभूतानि च निष्प्रया-समूरीक्रियेरन्। प्रतिक्रियापराङ्मुखता ( ६।६७-६९ ), समाजसेवाव्रतम् ( ६।३१ ), स्वायत्तता ( ६।३८, १०।२२ ), बालसमस्या ( ६।४९, ५४, ५८ ), कृषीसपर्या ( २।४४, १०।८ ), कुलपतिप्रकृतिः ( ८।१२ ), छात्रानुशासनम् ( ८।११, १०।६ ), शिक्षानीतिः ( ७।७-४०, १०।१० ), नारीजागरणम् ( ४।५७ ), एवमादयो विषया अत्र गोपयसि शर्करात्वमादधते। सीता-भरत-लक्ष्मणान् प्रति कौसल्यामातुः ( १।१६-२३ ), कैकेयीं

प्रति श्रीरामस्य ( १।३४, ३५ ), रामादीन् प्रति सीतायाः,[१] सीतां प्रत्युर्मिलायाः,[२] सीतां प्रत्येव वाल्मीकेः ( ७।७-४० ), सभासदः प्रति च तस्यैव महाकवेः ( ९।२०-२९ ), नागरान् वाल्मीकिं च प्रति महामुनेर्वसिष्ठस्य ( १।४९-५८, ९।३३-३५ ) च भाषणानि तथा प्राणवन्ति यथैतानि बोद्धव्यात्मनि चेतनामादधति। सन्ति च तान्यनिर्गलानि तर्कशुद्धानि च।

आश्रमभुवो वर्णनम् ( ६।११, २२ ), सीतायाः पुनर्दर्शनस्य चित्रोपममालेखनम् ( ९।४७-५४ ), सन्ध्यानिशामुखयोः प्राकरणिकानामेव भावानां परस्परमौपम्यसन्निवेशादन्तश्चुम्बि सौभाग्यसंदर्भणम् ( ७।४२, ५४, ५६ ), एवमादीनि कलाशिल्पानि प्राचीनमपि प्रतीताभिजात्यं संस्कृतसाहित्यं न विजातीययन्ति, न च स्वत्वमेव तत्र विहापयन्ति।

सीता हि भारतस्यास्य राष्ट्रदेवी ( १०।५४ )। तामाश्रित्य कृतं काव्यं भारतीयेभ्यो नूतमेव नासामयिकम्। देवीयं भारतमहीरूपाया मातुरेवाङ्के निलीयते, ततश्च तेनैव देहबन्धेन सर्वदैव भारमस्या अपनेतुमुदयते ( १०।७८ ), शस्त्रभूता सा शस्त्रिणम्, शक्तिभूता सा शक्तिमन्तम्, ज्वालाभूता च सा ज्वलनं श्रीरामं सनातनाद् विवस्वन्मण्डलात् तथैवाहरति यथा गायत्री द्युलोकात् पर्णम्। सोऽग्मिलाविवस्वदात्मजन्मनोर्लीलायागः सार्वजनोनतामजहद्, आत्मसंपदमनिराकुर्वन् तपोभूमिकामधितिष्ठँश्च चराचर मदमहर्निशमेव वैज्ञानिकेनैवाध्वनोद्दिधीर्षति। इदमेव नित्यप्रवृत्तं सोमाग्निसवनमुपास्य लोकलीलामुल्लिलासयिषन्तोऽत्र धन्याः। सर्वमङ्गलं चरितमिदं लीलाशुका इवाभिष्टूयार्जिताक्षय्यपुण्या हि महात्मानः सांप्रतमपि भारतीयानां कनिष्ठिकामधितिष्ठन्ति। नूनं नित्यप्रत्यग्रमेव मातुरस्या मङ्गलं चरितम्।

सर्वथा अत्र विचारा राष्ट्रियाः, भूमिका सामाजिकी, चरित्रं धार्मिकम्, प्रवृत्तिर्दार्शनिकी, व्यक्तिः कवित्वमयी, कथानकं च प्रवाहपटु। तेनात्र देवताप्रस्तरौ पुरातनौ शिल्पप्रतिष्ठे तु नूतने। अत एवेयमस्माकमाशीः—

ऋषिः सनातनश्छन्दो जगती, शक्तिरार्यता।
दैवतं राष्ट्रमोजः सत्कीलं, बीजाक्षरं तपः॥
यत्र, तन्मन्त्रकाव्यं मे विनियोगमवाप्नुयात्।
सार्वभौमे सतां शान्तिनाम्नि पुण्ये महाक्रतौ॥

अस्ति चायमस्मदीयः प्रणयः—

न यशसे, न धनाय, शिवेतरक्षतिकृतेऽपि च नैव कृतिर्मम।
इयमिमां भरतावनिसंस्कृतिं सुरगवीं च निषेवितुमुद्गता॥
सहृदया हृदयस्य मतेश्चितेरपि च तां परमां भुवमाश्रिताः।
कृतिमिमां कलयेयुररम्मदं वृणुयुरम्बुधनाश्च घनाघनाः॥ इति॥

—सनातनः **श्रीरेवाप्रसादः**

---

१. तृतीये सर्गे। २. चतुर्थे सर्गे।

अथ

सनातनकवि–श्रीरेवाप्रसाद–द्विवेदि–कृतौ

# उत्तरसीताचरिते

## प्रथमः सर्गः

**विभूष्य पौलस्त्यशिरोभिरीश्वरं महीतनुं तस्य सुतां समुद्वहन् ।**
**वनव्रतान्ते भगवान् रघूद्वहः सहानुजाभ्यां गृहमीयिवान् निजम् ॥**

**संकेतः**—रघूद्वहः श्रीरामः पौलस्त्यानां रावणप्रभृतीनां शिरोभिः कमलभूतैः महीतनुं पृथ्वीमूर्त्तिम् ईश्वरं शिवं विभूष्य तस्य प्रसादभूतां सुतां सीतां समुद्वहन् वनव्रतान्ते चतुर्द्दशाब्दावधिकवनवासरूपव्रतपारणोत्तरम्, अनुजाभ्यां लक्ष्मणः, नन्दिग्रामे संगतो भरतश्चेति लघुभ्रातृभ्यां सह निजं गृहम् अयोध्यापुरीम् ईयिवान् प्राप्तः । रावणं निहत्य सीतां चासाद्य वनावधिं समाप्य प्रत्यावृत्त इति यावत् । अन्योऽपि व्रतान्ते स्वेष्टदेवतां पुष्पादिभिः पूजयित्वा ततो लब्धया शेषया विभूषितवपुर्नद्यादिपरिसराद् बान्धवैः सह स्वं नगरं प्रत्यावर्त्तते । सोऽयमत्र पर्यायोक्त–रूपक-समासोक्तिभिर्वंशस्थेन वस्तुनिर्देशः ॥१॥

रावण आदि के सिरों से अष्टमूर्त्ति भगवान् शिव की अन्यतम मूर्त्ति पृथ्वी को विभूषित कर उस (पृथ्वी) की पुत्री (सीता) को लिए हुए भगवान् राम वनवासव्रत पूरा होने पर दोनों अनुजों ( लक्ष्मण तथा भरत ) के साथ अपने घर ( अयोध्या ) पहुँचे ॥१॥

**स रामनामा भगवाँश्च मानवः स चापि कश्चिद् भरताभिधानवान् ।**
**विनिर्ममाते मिलितौ, हिमाचलो महोदधिश्चापि यथाऽऽर्यभूमिकाम् ॥**

**संकेतः**—आर्यभूमिकापदे रामभरतपक्षे कर्मधारय , तेनोच्चैस्तम–सच्चारित्र्य-भूमिका तदर्थः, हिमाचलमहोदधिपक्षे च षष्ठीतत्पुरुषः, तेन भारतराष्ट्रस्य स्थलवेदि-स्तदर्थः । समानानुपूर्वीकशब्दवाच्यत्वेन तादृशभूमिकाद्वयेऽभेदात् तन्निर्मातृत्वसामान्यात् पक्षद्वयौपम्यविश्रान्तिः । तत्र पूर्व-दक्षिण-पश्चिमासु दिक्षु विततमूर्त्तेर्महोदधेरेकात्मत्वमेव

विवक्षितमिति न प्रकृताप्रकृतयोः संख्यावैषम्यम्। हिमगिरेः पूर्वापरसागरावगाढत्वं 'पूर्वापरौ तोयनिधी वगाह्य' [कुमार० १।१] त्यादिमहाकविप्रयोगात् प्रतीतचरमेव ॥२॥

वह राम नामक भगवान् और भरत नामक वह कोई लोकोत्तर मानव, जब मिले तो उन्होंने उसी प्रकार एक आर्य ( उत्कृष्ट ) भूमिका ( चरित्रादर्श ) का निर्माण किया जिस प्रकार हिमालय और महोदधि मिलकर आर्यभूमिका (भारतीय स्थलवेदी) का निर्माण किया करते हैं ॥२॥

**स सीतया भ्रातृयुगेन चान्वितस्तदा स्वपुर्यां शुशुभे गभीरहृत्।**
**कुमारिकायामिव भारतोदधिः ससिंहलश्रीरुदधिद्वयाश्रितः ॥**

**संकेतः**—कुमारिकायां कन्याकुमारीतिव्यपदिश्यमानायां भुवि भारताब्धिः सांप्रतं हिन्दमहासागरनाम्ना प्रख्यातो महोदधिः। उदधिद्वयपदेनात्र पूर्वापरसागरौ विवक्षितौ। दिग्विभागेन सागरभेदकल्पनयात्र साम्यविश्रान्तिः। गम्भीरहृत्त्वं महोदधिष्वपि योज्यम् ॥३॥

सीता तथा उन दोनों भाइयों से युक्त गंभीरहृदय राम अयोध्या में वैसे ही सुशोभित हो रहे थे जैसे कुमारी अन्तरीप में सिंहलश्री तथा ( पूर्व और पश्चिम के ) दोनों समुद्रों से युक्त गंभीरहृदय भारताब्धि ( हिन्द महासागर ) सुशोभित होता है ॥३॥

**तदुत्पल-श्याम-शुभं वनावधेः शुचेरिवान्ते वपुरक्षिभिः पिबन्।**
**पयस्विमेघप्रभमाप चातकव्रतानि साकेतनिवासिनां व्रजः ॥**

**संकेतः**—चातकोऽपि शुचेर्निदाघस्यान्ते उत्पलश्यामं पयःपूर्णं मेघं पश्यति तृप्तिं च विन्दति ॥

भगवान् राम के जलभरित मेघ जैसे उत्पलश्याम और शुभ शरीर को ग्रीष्म जैसी वनवासावधि के बीत जाने पर आँखों से पीता साकेत-निवासी जनसमुदाय चातक जैसा लग रहा था ॥४॥

**तदोत्पलाक्ष्या नवनीतसोदरां विदेहपुत्र्यास्तनुवल्लरीं जनाः।**
**रिपोर्महेभस्य करान्मृणालिनीं यथोद्धृतां वीक्ष्य मुदा निशश्वसुः ॥**

**संकेत**—रिपो रावणस्य करात् हस्तपाशात्। महेभपक्षे करः शुण्डादण्डः।

उस उत्पलाक्षी सीता की नवनीत—सहोदर तनुलता को महागज की विकराल सूँड़ से कमलिनी की नाईं शत्रु ( रावण ) के हाथ से समुद्धृत देख जनता आनन्द की साँसें ले रही थी ॥५॥

**जनैः सुमित्रातनयेऽग्रजं प्रति प्रजावतीं चैव दृढव्रते ततः ।**
**उदीरितालोकपदैर्नभःस्पृशः स्वरादसामान्यकृतावभूयत ॥**

तब अयोध्या की जनता अग्रज ( राम ) तथा भौजाई ( सीती ) के प्रति दृढव्रत तथा असाधारण चरित्र के धनी लक्ष्मण की जय जयकार आकाशचुम्बी स्वर से कर रही थी ॥६॥

**हरिद्दलालंकृततीर्थवारिभिः सधूपवासैर्यवदन्तुरैर्घटैः ।**
**शुभैस्तथान्तःकरणैः प्रजावतां पुरस्कृतास्ते भरतानुयायिनाम् ॥**

उस समय भरत के अनुयायी प्रजाजनों ने हरित पत्तों से अलंकृत तीर्थजलों, जवारे भरे धूपित घटों और शुभ अन्तःकरणों से उन सबकी अगवानी की ॥७॥

**सपुष्पवर्षं वियतोऽप्सरोगणा जगुर्यथा तस्य महत्पराक्रमान् ।**
**तथा पुरो लाजकणप्रवर्षणैः समं प्रबुद्धा नवबालिका अपि ॥**

**संकेतः**—महत्सु रावणेन्द्रजित्प्रभृतिषु न तु क्षुद्रेषु पराक्रमान् ॥८॥

उस क्षण श्रीराम के रावण आदि बड़े-बड़े वीरों पर किए गए पराक्रमों की बिरुदावलि पुष्पवर्षा के साथ आकाश में अप्सराएँ गा रही थीं और पृथ्वीतल पर लाजवृष्टि के साथ नई बच्चियाँ ॥८॥

**स दर्शनाकाङ्क्षिभिरुत्कटं जनैर्निरुद्धवर्त्मा गृहमीयिवांस्तथा ।**
**यथा तरङ्गैरमृतांशुविग्रहस्तटप्रदेशं समुपैति वारिधेः ॥**

दर्शनों के लिए आतुर जनसमुदाय से घिरा पथ पार कर भगवान् राम उसी प्रकार राजमहल पहुँचे, जिस प्रकार उत्कट तरङ्गों से निरुद्ध पथ पारकर चन्द्रबिम्ब समुद्रतट तक पहुँचा करता है ॥९॥

**निरीक्ष्य पूज्यान् सचिवान् वियोगतः पितुर्निजस्यापि च तत्र धीरधीः ।**
**शुशोच मीनानिव वारिदात्ययात् सरोविशोषाच्च विवर्णितद्युतीन् ॥**

पूज्य सचिवों को पिता दशरथजी तथा स्वयं के वियोग में जलवर्षी मेघ के चले जाने और सरोवर के भी सूख जाने पर मत्स्यों के समान विवर्णद्युति देख भगवान् राम दुःखी हुए ॥१०॥

**तदा शुचिं वर्णविभक्तिमीयुषा स्वरेण मैत्रावरुणेन बोधितः ।**
**निजां सुमित्रासहितां स मातरं नुनाव सा चापि परात्परं प्रभुम् ॥**

उसी दुःख में खोए भगवान् राम को वसिष्ठजी ने स्पष्ट और शुचि वर्णों वाली

वाणी में जगाया तो उन्होंने अपनी सुमित्रासहिता माता ( कौसल्या ) को प्रणाम किया और उस ( सुमित्रासहित माता ) ने परात्पर प्रभु को ॥११॥

उवाच माता सममाशिषां शतैर्ममैव मन्ये सुतभाग्यविप्लवात् ।
निदाघवर्षाशिशिरेषु काननान्यगाहथाः पङ्कजपेशलोऽपि सन् ॥

माता कौसल्या हजार आशीष दे बोलीं—मेरे लाल, मेरे अभाग्य से कमलसा सुकुमार होते हुए भी तू जंगल-जंगल भटका ग्रीष्म में, वर्षा में, ठंड में ॥१२॥

क्व कौतुकेनाध्वनि पुष्पसंवृते पुरा दधाति स्म पदाम्बुजद्वयम् ।
क्व वा स त्वध्वालमलम्बुषाभिधा सहानुजेनासि च कण्टकैः क्षतः ॥

कहाँ तो पहले तू, चलने का कौतुक करना होता था तो, पुष्पों से ढंके पथपर पैर रखा करता था और कहाँ छुईमुई सी इस बहू और छोटे भाई के साथ तेरे पैरों में काँटें टूटे ॥१३॥

त्वमद्य वन्द्यो जगतां परिष्कृतैः शरीर-धी-चित्त-चितां पराक्रमैः ।
तव प्रसूत्या मम चापि धन्यतां समं कुलेनैव रवेर्गतं जनुः ॥

अब आज तू संसार भर के लिए वन्दनीय बना है, क्योंकि तेरे शारीरिक, बौद्धिक, मानसिक और आध्यात्मिक सभी प्रकार के पराक्रम परिष्कृत सिद्ध हुए हैं। तुझे जन्म देकर सूर्य के इस वंश के ही साथ मेरा भी जन्म धन्य हो गया है ॥१४॥

स्नुषां स्वकीयामथ तां तनीयसीं व्रतेन पत्युर्नयनाम्बुभिर्द्रुता ।
उवाच माता ममता-दया-तट-द्वये वहन्तीव सुवत्सला स्रुतिः ॥

आँखों में आँसू लेकर और इसलिए ममता और दया रूपी दो तटों के बीच बहती वात्सल्यमयी निर्झरिणी-सी लग रही माता कौसल्या अब पातिव्रत्य के पालन से अधिक दुबली अपनी पुत्रवधू ( सीता जी ) से बोलीं ॥१५॥

सुते ! विधौ वामविधायिनि व्रतं सुताय मे स्निग्धमना न यात्यजः ।
पतिव्रतानामभिरक्षितत्रपा त्वमेव वन्द्याऽसि ममैव साधुना ॥

बेटी, विधाता के वाम होने पर भी स्नेहपूर्ण चित्त से तूने मेरे बेटे के लिए धारण किए व्रत को, जो नहीं तोड़ा और पतिव्रताओं की लाज बचा ली, इसलिए, मुझ सास के लिए तू बहू ही आज वन्दनीय हो गई है ॥१६॥

न राक्षसीं संस्कृतिमार्यसंस्कृतौ कृतस्थितिः कोऽपि भजेत सन्मतिः ।
वगाह्य गङ्गां न हि कर्मनाशिनीं वगाहितुं कोऽपि समीहते सुधीः ॥

शुभ बुद्धि वाला कोई भी व्यक्ति जो आर्यसंस्कृति में मर्यादापूर्वक दीक्षित हो, राक्षससंस्कृति को नहीं अपना सकता। कोई भी सुधी गंगाजी में स्नानकर कर्मनाशा में स्नान नहीं करता ॥१७॥

**त्वयापि पुत्रि प्रथितामिमां सृतिं विहातुमुत्प्रेरितयापि रक्षिता।**
**चरित्रमुद्रा यदियं गरीयसी ततोऽसि रामादपि लक्ष्मणादपि॥**

हे पुत्रि! इस स्थिति को छोड़ने के लिए बलपूर्वक काफी प्रेरित होने पर भी जो तूने अपनी चरित्रमुद्रा सुरक्षित रखी इससे तू राम से भी बड़ी है और लक्ष्मण से भी ॥१८॥

**त्वमेव भास्वत्कुल-कीर्ति-केतने वृषाङ्कमुद्रासि नृलोकवन्दिता।**
**त्वमेव रामायणनाम्नि मन्दिरे विभासि सर्वप्रमुखा च देवता॥**

संकेतः—भास्वतः सूर्यस्य यत् कुलं तस्य कीर्तिकेतने यशःपताकायाम् वृषाङ्का धर्मप्रतीकभूतस्य वृषस्याङ्को यस्यां सा मुद्रा। वृषस्य धर्मप्रतीकत्वादेव नृलोकवन्दितत्वम्, नृसमाजस्य धर्ममात्राश्रितत्वात् ॥१९॥

तू ही है सूर्य वंश की कीर्त्ति पताका पर संपूर्ण मनुष्यसृष्टि के लिए वंदनीय वृष (धर्म) की मुद्रा और तू ही है 'रामायण' नामक मन्दिर में सबसे अधिक महत्त्व की देवप्रतिमा ॥१९॥

**त्वयोन्नतं दाशरथं शिरोऽद्य तत्, त्वया प्रकाशोऽन्वय एष भास्वतः।**
**त्वयाऽस्ति पूता ननु मानवी मही त्वया सगर्वं खलु राष्ट्रमस्ति नः॥**

महाराज दशरथ का वह लालट आज तुझसे ही ऊँचा हैं, तुझसे ही यह सूर्य का वंश प्रकाशित है, तुझसे ही यह मानव धरा पवित्र है और तुझसे ही है सगर्व हमारा राष्ट्र ॥२०॥

**अथार्करोचिःप्रतिमश्चरित्रतस्तया बभाषे भरतः सलक्ष्मणः।**
**मुदा च मातुर्हृदयेन चापि तत्कृतज्ञभावाच्च परिप्लुतात्मना॥**

इसके पश्चात् माता कौसल्या जिनका हृदय प्रसन्नता, मातृत्व और कृतज्ञता से परिप्लुत था, चरित्र से सूर्यप्रभा के समान उज्ज्वल भरत तथा लक्ष्मण से बोलीं—॥२१॥

**इयं जटा चीरमिदं च वां सुतौ कुलस्य देशस्य च नः प्रतीकताम्।**
**समर्पण-स्वार्थधियो रणस्थले गते युगेभ्योऽत्र वसुन्धरातले॥**

संकेतः—समर्पणं स्वार्थश्चेति यौ परस्परं विरुद्धौ भावौ तयोः ये धियौ तयो रणस्य स्थले एव वसुन्धरातल इति योजना ॥२२॥

बच्चों ! तुम दोनों के ये चीर और ये जटाएँ समर्पणबुद्धि और स्वार्थबुद्धि के युद्धस्थल इस धराधाम पर युगयुगों के लिए हमारे वंश और हमारे राष्ट्र के प्रतीकचिह्न बन गए हैं ।।२२।।

**न रामभद्रो जनकात्मजापि वा तथाऽद्य मह्यं रुचिरौ यथा युवाम् ।**
**ययोः परार्थे निजसौख्य-वर्जन-व्रतं समाजद्रुममूलमीक्ष्यते ।।**

**संकेतः**—स्वसौख्यपरित्याग एव समाजरूपस्य वृक्षस्य मूलमिति भावः ।।२३।।

रामभद्र और जनकात्मजा ( सीता ) भी आज मुझे उतने प्रिय नहीं हैं जितने तुम, जिनमें दूसरे के लिए अपने सुख के परित्याग का व्रत, जो समाजरूपी वृक्ष का बीज है, दिखाई दे रहा है ।।२३।।

**निशम्य तां क्षत्रियशोणितोदितां गिरं विवेकस्थिरसंविदुद्गताम् ।**
**जहुर्महान्तं क्लममात्मनः सुताः सतां प्रसादः श्रमजोऽपि तोषदः ।।**

**संकेतः**—क्षत्रियशोणितपदार्थेन कौसल्याध्यवसिता ।।२४।।

क्षत्रियशोणित ( कौसल्या जी ) की इस प्रकार की विवेक-स्थिर चेतना से उद्‌गत वाणी को सुन सभी पुत्रों और सीताजी ने स्वयं को गहन क्लान्ति से मुक्त पाया । सत्पुरुषों की प्रसन्नता, प्राप्त तो होती है श्रम से ही; परन्तु देती है परम आत्मतोष ।।२४।।

**निजागमोल्लासितसेवकं ततः प्रपूरितं तोरण-वाद्य-गुञ्जितैः ।**
**शिखावलोद्वर्तितमेचकं पितुः प्रियं किरीटादपि सद्म ते ययुः ।।**

**संकेतः**—तोरणस्थानां वाद्यानां गुञ्जितैरिति भावः । पितृपदार्थस्य काकाक्षिगोलकन्यायेन किरीटं सद्म चेति द्वितयेनाप्यन्वयः ।।२५।।

इसके पश्चात् वे सभी पिता ( दशरथ ) जी के निवास-भवन पहुँचे, जहाँ सभी सेवक उनके पहुँचने से उल्लासयुक्त दिखाई दे रहे थे, जहाँ तोरण के ऊपर वाद्य बजाए जा रहे थे, जहाँ मयूर अपने पिच्छ फैलाकर नृत्य कर रहे थे और जो पिता ( दशरथ ) जी को उनके किरीट से भी अधिक प्रिय था और इसीलिए उन पुत्रों को भी जिसपर पिताजी के किरीट से भी अधिक ममता थी ।।२५।।

**गृहं, विना तातममुष्य मानसं न पिप्रिये हन्त सुतव्रजस्य तत् ।**
**तथा, यथा देवकुलं विदैवतं यथा च चैतन्यमृते कलेवरम् ।।**

**संकेतः**—देवकुलं देवगृहम् विदैवतं देवप्रतिमारहितम् । पिप्रिये प्रीतिमत् चक्रुः दैवादिकः प्रीत्यर्थकः प्रीङ् । ऋतेयोगे "अन्येभ्योऽपि दृश्यन्त" इति द्वितीया ।।२६।।

पिताजी से रहित वह भवन उन बच्चों को वैसे ही अच्छा नहीं लगा जैसे देवप्रतिमा से रहित देवकुल ( देवमन्दिर ) या चैतन्य से रहित शरीर ॥२६॥

**अमुत्र पूजाविधिमार्यजन्मनां ललाटपुण्ड्राय निजाग्रजन्मने ।**
**विधातुमीशाय नु नन्दिकेश्वरोऽनुजस्तृतीयो ददृशे मुखावनौ ॥**

**संकेतः**—आर्यजन्मानो भारतीया जनाः। त्रितयेऽप्यग्रजन्मानो राम-भरत-लक्ष्मणा मिलित्वा एकं शिवत्रिपुण्ड्रम् तन्मध्ये कुंकुमश्रीश्च सीतेत्यर्थादायाताम्। तृतीयोऽनुजः शत्रुघ्नः। मुखं द्वारम्। नन्दिनामा रुद्रोऽपि यथा भगवत ईशादभिन्नस्तदंशत्वात् तथैव शत्रुघ्नोऽपि श्रीरामादभिन्नस्तदंशावतारत्वात् ॥२७॥

वहाँ दरवाजे पर अपने अग्रज और आर्यजनों के ललाट-त्रिपुण्ड्र राम के लिए पूजा द्रव्य लेकर शत्रुघ्न उपस्थित दिखाई दिए। वे वैसे ही लग रहे थे जैसे भगवान् शिव के लिए पूजाद्रव्य लेकर उपस्थित नन्दिकेश्वर लगते हैं ॥२७॥

**वदातवासा व्यपनीतभूषणः समाल्यपाणिर्द्युतिमान् कनिष्ठकः ।**
**अदृश्यताग्रेजनुषां पुरः स्थितो यथा गुरूणां चरणे स्वधीतवान् ॥**

**संकेतः**—कनिष्ठेषु कनिष्ठः कनिष्ठकः। चरणे आश्रमपदे च। स्वधीतवान् सुस्नातकः ॥२८॥

अपने हाथों में माला लेकर बड़े भाइयों के सामने उपस्थित सफेद वस्त्र पहने और आभूषण छोड़े हुए शत्रुघ्न ऐसे दिखाई दे रहे थे जैसे कोई योग्य स्नातक दिखाई देता है अपने गुरुजनों के बीच गुरुकुल में ॥२८॥

**उरस्सु तेषां विससर्ज कौसुमीः स्रजः स, ते तस्य च बाष्पनिर्मिताः ।**
**अमन्यतानेन जनो नृपालयं गतं तदा स्नेहसुधा-प्रयागताम् ॥**

**संकेतः**—प्रयागौपम्येन भावौचित्यातिशयो व्यञ्जितः ॥२९॥

शत्रुघ्न ने अपने भाइयों के वक्षःस्थलों पर पुष्पनिर्मित मालाएँ अर्पित कीं और उनने शत्रुघ्न पर अश्रुनिर्मित मालाएँ। इस दृश्य को देखकर जनता ने उस राजभवन को स्नेहसुधा का प्रयाग माना ॥२९॥

**विधृत्य दोर्भ्यां परिरभ्य वक्षसा स्वबाल्यसेवारसिकांश्च ते जनान् ।**
**पितुर्वियोगात् तपसीव दीक्षितान् पुनः पुराणीं विदधुः श्रियं श्रितान् ॥**

**संकेतः**—सेवारसिकाः प्रेम्णा स्वसेवापरायणाः। पुराणीं प्राचीनां श्रियं शोभाम् ॥३०॥

उन सभी ने अपने बचपन के सेवारसिक परिजनों को, दशरथजी के वियोग से जो तपश्चर्या में दीक्षित हुए से लग रहे थे, अपने हाथों उठाया, छाती से लगाया और उनकी पुरानी शोभा को फिर से प्राप्त करा दिया ॥३०॥

**स्थितां ततः सद्मनि तत्र मध्यमां सुवं व्यपश्यञ्जनकं विना सुताः ।**
**प्रभामिवास्तोदधिमज्जितात्मनो रवेर्निशीथे स्फुरितां विभावसौ ॥**

संकेतः—मध्यमां सुवं कैकेयीम् । विभावसौ वह्नौ ॥३१॥

उस भवन में विद्यमान थीं मझली माँ कैकेयी । पिता (दशरथ) जी से रहित वे (माता कैकेयी राम आदि) पुत्रों को, अस्तोदधि में डूब चूके सूर्य की रात्रिमध्य में अग्नि के भीतर स्फुरित प्रभा सी प्रतीत हुई ॥३१॥

**क्षतात् सतस्त्रायत इत्यतीव सद् यशो यतः क्षत्रपदाभिमानिनः ।**
**अपारयन् धातुमिमे सुवं तु तां सुवो निजाया अपि मेनिरेऽर्चिताम् ॥**

संकेतः—'क्षतात् त्रायत' इति कालिदासः, सतस्त्रायत इति तु सनातनः । अत एव कालिदासस्य क्षत्राणां यशो यशोमात्रम्, सनातनस्य क्षत्राणां पुनः सद् यशः । तुः व्यतिरेके ॥३२॥

पुत्रों ने इस माता को अपनी अन्य माताओं से भी अधिक पूज्य माना, क्योंकि 'क्षत्र' शब्द का अभिमान रखने वाले क्षत्रिय 'हानि से सज्जनों की रक्षा करने वाले ही होते हैं । क्षत्र=क्षत्रिय' इस उज्ज्वल यश की रक्षा, ये सब इसी माता के कारण कर सके थे ॥३२॥

**इमां त्रपातो नतपूर्वविग्रहामुवाच रामो जननि प्रभावतः ।**
**तवैव यातः सुगतिं प्रजेश्वरः समं तलेनैव भुवो न संशयः ॥**

संकेतः—प्रजेश्वरो दशरथः ॥३३॥

श्रीराम लज्जानत सिर माता कैकेयी से बोले—हे मातः, निःसंशय यह आपका ही प्रभाव है कि महाराज (दशरथ जी) अच्छी गति को प्राप्त हुए, और यह पृथ्वीतल भी (अच्छी स्थिति को प्राप्त हुआ) ॥३३॥

**विधातुमेतां जगतीमशल्यकां कृतं सशल्यं स्वमनो यतस्त्वया ।**
**त्वमेव मातर्ननु दूरदर्शिनां धुरि स्थिता राजनये सुमेधसाम् ॥**

माता, आपने संसार को निश्शल्य (निष्कण्टक) बनाने के लिए अपने हृदय को सशल्य बनाया । अतः राजनीति के दूरदर्शी सुमेधाओं में निश्चित ही आपका ही है प्रथम स्थान ॥३४॥

**यदस्ति पौलस्त्य-विनाश-नाटकं त्वमेव तत्र प्रणिधानवानृषिः ।**
**त्वमेव तत्रासि च सूत्रधारिणी वयं तु मूका ननु तत्र पुत्तलाः ॥**

**संकेतः**—ऋषिः नाटकोपनिषद्द्रष्टृभूता । सूत्रधारिणी पुत्तलाभिनयौपयिकं सूत्रं धरतीति ॥३५॥

'रावण विनाश' एक नाटक है तो हे माता, यह जिसकी प्रतिभा में स्फुरित हुआ वह द्रष्टा ऋषि और प्रतिभासम्पन्न कवि आप ही हैं। उसका प्रयोग कराने वाली सूत्रधारिणी भी आप ही हैं। हम तो थे केवल पुतले, मूक अभिनय करने वाले' ॥३५॥

**इतीव मूकां नियतिं यथा प्रभुर्मनःस्थितिं दर्शितसत्फलां सुवः ।**
**निवेद्य तस्या भरतानुयायिनो जनस्य कृत्स्नस्य दृशं व्यशोधयत् ॥**

**संकेतः**—भरतानुयायित्वं कैकेयीनिन्दकत्वे ॥३६॥

प्रभु राम ने इस प्रकार माता कैकेयी की अपने बनवास के पीछे छिपी मौन नियति जैसी मौन मनोभावना को मुखर शब्दों में स्पष्ट किया और भरत तथा उनके ही जैसे अन्य सभी व्यक्तियों की आँखें प्रमाणित कर दीं ॥३६॥

**विलक्षितोऽन्तर्विकृतेश्च लक्ष्मणः प्रणम्य मध्यां प्रसुवं निजाश्रुभिः ।**
**पदे तदीये द्रुतिमीयुषा हृदा यथैव सम्यक् स्नपयांबभूव सः ॥**

**संकेतः**—विलक्षितो लज्जितः । अन्तर्विकृतिः अन्यथाभावः । द्रुतिं द्रवताम् ईयुषा गतवता हृदा यथैवेत्युत्प्रेक्षा । अश्रूणामपह्नवश्चात्र गम्यः ॥३७॥

माता कैकेयी के प्रति मन ही मन रुष्ट लक्ष्मण भी अपनी मनोवृत्ति पर लज्जित हुए और उनने माता को प्रणाम कर अपने बहते आँसुओं के रूप में वह निकले चित्त से ही उनके दोनों चरणों का सम्यक् प्रक्षालन किया ॥३८॥

**परस्परं सम्मिलिता नृपात्मजा इमेऽन्तरङ्गेण च कर्मणापि च ।**
**चकासिरेऽर्था जनुषो यथा यथा प्रदीपधर्मा यदि वान्ववायिनः ॥**

**संकेतः**—जनुषो जन्मनः अर्थाः फलानि धर्मादयः । प्रदीपधर्माः प्रकाशकत्वादयः । अन्ववायिनः समवायभाजः, अपृथक्स्थिता इति यावत् । धर्मादिषु समवायः पुरुषप्रयत्नसाध्यः, अत एवौपाधिकः, प्रदीपधर्मेषु तु स स्वाभाविकः । अन्तरङ्ग—कर्मभ्यामेष उपमानद्वयेऽपि योज्यः ॥३८॥

अन्तःकरण और कार्य दोनों से परस्पर में मिले ये राजपुत्र ऐसे प्रतीत हो रहें थे जैसे परस्पर में मिलित चारों पुरुषार्थ हों, या हों वैसे ही प्रदीपधर्म ॥३८॥

**चतुष्टयं तद् रघुवंश-कल्पद-द्रुमालवाले शुशुभे कृतात्मनाम् ।**
**चरित्र-पीयूष-पयोमुचां यथा त्रिलोकमाङ्गल्यवपुः प्रवर्षणम् ॥**

**संकेतः**—रघुवंश एव कल्पानभिलाषान् ददतीति कल्पदा द्रुमाः कल्पवृक्षाः तेषाम् आलवाल आधारः तस्मिन् चरित्रमेव पीयूषं तन्मयानां मेघानामेव तेषां कृतात्मनां राजपुत्राणां तच्चतुष्टयं त्रिलोकमाङ्गल्यरूपं प्रवर्षणमिव शुशुभ इत्यन्वयः ॥३९॥

उन कृतात्मा राजपुत्रों की वह जोडी ऐसी लग रही थी जैसे रघुवंशरूपी कल्पवृक्ष के थाले में चरित्र रूपी पीयूष को बरसाने वाले मेघों की त्रैलोक्यमंगलकारी वृष्टि हो ॥३९॥

**वनीव पुंस्कोकिलकूजितेन सतिप्रयेव वीरप्रियसौभगेन वा ।**
**सचेतनेवोत्तरकोसलौकसां जयस्वनेनाजनि सा तदा पुरी ॥**

**संकेतः**—सतिप्रया अपुंश्चली भार्या । सौभगं प्रियवाल्लभ्यम् ॥४०॥

उस समय उत्तर कोसल के निवासियों की वह नगरी ( अयोध्या ) उनके जय जयकार से उसी प्रकार सचेतन सी हो उठी जिस प्रकार उद्यानभूमि पुंस्कोकिल की कूक से या साध्वी प्रेयसी वीर प्रिय के प्रेम से सचेतन हो उठती है ॥४०॥

**प्रक्लृप्तकेशा अपनीतवल्कला नरेन्द्रनेपथ्यसमेधितश्रियः ।**
**नृपात्मजास्ते प्रचकाशिरे यथा समग्रभूषा मधुकल्पपादपाः ॥**

**संकेतः**—नरेन्द्रनेपथ्यं दुकूलालंकारादि तेन समेधिता श्रीः स्वकीया शोभा येषां ते । कल्पपादपा अपि दुकूलहारालंकारशोभिनो भवन्तीति महाकविषु प्रसिद्धमेव । कल्पवृक्षसामान्यमपि यदा मनोहरच्छवि तदा का वार्ता वसन्तपरिस्पन्दशोभिनां तेषामिति भावः ॥४१॥

अब अयोध्या लौटे राजपुत्रों का क्षौरकर्म हुआ । उन्होंने बल्कल हटाए और राजकीय वेष धारण किए । राजकुमार ऐसे सुशोभित हुए जैसे समग्र अलंकरणों से युक्त होने पर वसन्तकालीन कल्पवृक्ष सुशोभित हुआ करते हैं ॥४१॥

**मनोरथानामिव पूर्तिरग्रिमा ततः प्रजाया यदि वार्यभूश्रियाः ।**
**गजाश्वरत्नैरथ वाद्यमङ्गलैः शुभा समायोजि पुरप्रदक्षिणा ॥**

**संकेतः**—आर्यभुवो भारतस्य श्रियाः साम्राज्यलक्ष्म्याः ॥४२॥

इसके पश्चात् उत्तम गज और उत्तम अश्वों तथा बजते हुए उत्तम वाद्यों के साथ अतीव मांगलिक नगर-प्रदक्षिणा का आयोजन किया गया । यह प्रदक्षिणा प्रजा के

या ऐसा कहा जाए कि आर्यलोगों की श्रीदेवी के ही मनोरथों की उत्कृष्ट पूर्ति थी ॥४२॥

**बभूव यस्यां जनतामनःसखी प्रसूनवृष्टिर्मधुराग-निर्भरा ।**
**द्विरेफमालासचिवाऽक्षिसन्ततिस्तथा पिशङ्गद्युतिरश्रुमण्डिता ॥**

**संकेतः**—जनतामनःसखी तत्सदृशी, सादृश्यं च मधुरागनिर्भरत्वेन । तच्च मनःपक्षे मधुरानुरागातिशयस्वरूपम्, प्रसूनपक्षे च मधु पुष्परसः, रागो रक्तिमा तत्प्रचुरत्वरूपम् । द्विरेफमाला भ्रमरपङ्क्तिः, तत्सचिवा तत्सहकृता तत्समा च । साम्यं च पिशङ्गद्युतित्वेन । उपमेयमत्राक्षिसन्ततिः । अश्रु चात्र हर्षाश्रु । तेन चाक्षिसन्ततेः प्रसूनवृष्ट्यापि सह साम्यमवाप्तपर्याप्तप्रसरम् । तदा च द्विरेफमालासाचिव्यं तत्सहितत्व-रूपमेव । पिशङ्गता च प्रसूनेषु न न प्रसिद्धा ॥४३॥

उसमें एक ओर मधुराग से निर्भर पुष्पवृष्टि हो रही थी जिसके साथ जनता के हृदय भी वरस रहे थे, और दूसरी ओर प्रजाजन के पिशंग वर्ण के नेत्र भी टूटे पड़ रहे थे, जिनका साथ उसी वर्ण की भ्रमर पंक्ति भी दे रही थी ॥४३॥

**सदश्वभाण्डैरिभवर्णकम्बलै रथाङ्ग - जाम्बूनदनादि - नूपुरैः ॥**
**पदातिवीरांशुक-हीरकांशुभिर्वधूर्नवेयाय सरित्तटं च सा ॥**

**संकेतः**—सन्तश्च तेऽश्वाश्च, तेषां सन्ति चेमानि भाण्डानि तैः, इभानां गजानां वर्णकम्बलैः कुथभूतैः रथाङ्गेषु चक्रेषु जाम्बूनदस्य हेम्नो नादीनि गीतिमन्ति नूपुराणि तैः पदातयो ये वीराः, तेषां यान्यंशुकानि तेषां ये हीरकाः तेषामंशुभिः किरणैः नवा वधूः सा प्रदक्षिणा तत्कर्तृभूता जनतेति यावत्, सरितः सरय्वास्तटं प्राप ॥४४॥

अश्वों के उत्तम अलंकारों, गजों के वर्णकम्बलों, रथों के झनझनाते सुवर्ण-निर्मित नूपुर तथा पैदल सेना की रेशमी पोशाक में जटित हीरों की बिखरती रश्मिओं से नई दुलहिन बनी वह शोभायात्रा नदी—( सरयू ) तट पहुँची ॥४४॥

**पदोर्गृहीतोदकयोस्ततस्तदा निजाग्रजस्योत्तमपूरुषस्य, ते ।**
**प्यधायिषातां भरतेन पादुके कृते पृथिव्या अधिदेवतेव ये ॥**

**संकेतः**—अग्रजस्य पदोः पदयोस्ते पादुके प्यधायिषातां ये द्वे मेलयित्वा पृथिव्या एका अधिदेवता अधिष्ठात्री देवतेव कृते इत्यन्वयः ॥४५॥

वहाँ भरत ने अपने अग्रज और उत्तम पुरुष श्रीराम के पैर पखारे, चरणोदक लिया तथा वे दोनों खड़ाऊँ पहना दीं जिन्हें उन्होंने अभीतक पृथ्वी के लिए अधिदैवत बना रखा था ॥४५॥

**नृपात्मजानामनुभूय तादृशं विकश्मलं प्रेम पुरौकसस्तदा ।**
**बभूवुरत्यन्त-विकासितेक्षणा विकोशिताब्जाः कमलाकरा यथा ॥**

**संकेतः**—नृपात्मजेषु प्रेम्णः प्रायिकत्वात् पुरवासिनां तथा स्थितिः ।

राजपुत्रों का ऐसा निष्कालुष्य प्रेम देखा तो अत्यन्त विकसित नेत्रों वाले नगरवासी खूब खिले कमलों से मण्डित कमलाकर (सरोवर) से दिखाई देने लगे ॥४६॥

**अवेक्ष्य तां प्रीतिमयीं पुरौकसां प्रवृत्तिमाह्लादितमानसो गुरुः ।**
**ऋचां विधानादपि यं न लब्धवानलब्ध तं तोषरसं स्थितेः स्थितेः ॥**

**संकेतः**—स्थितेः मर्यादायाः स्थितेः सत्त्वात् । मर्यादा धारणा स्थितिरित्यमरः । राजप्रजयोः सौमनस्यमेव सौराज्यमिति विचार्येति भावः ।

गुरु वसिष्ठ जी ने नगरनिवासियों की वह प्रीतिस्निग्ध प्रवृत्ति देखी तो उनका चित्त आह्लाद से भर गया और उन्हें वह परितोष मिला जो ऋचाओं के विधान से भी नहीं मिला था । मानवीय मर्यादा उन्हें सुरक्षित जो दिखाई दे रही थी ॥४७॥

**सभां समावर्जित-कर्ण-शष्कुलीं विधाय सौम्येन ततः स्वरेण ताम् ।**
**स पूर्णकामो भगवान् प्रवर्षयन्निवामृतेनोपदिदेश साम्प्रतम् ॥**

**संकेतः**—पूर्णकामत्वेनोपदेशस्य परार्थैकवृत्तित्वं प्रतीयते । साम्प्रतं तत्कालोचितं धर्मम् ॥४८॥

तब पूर्णकाम और आध्यात्मिक सिद्धियों से संपन्न उन (गुरु वसिष्ठ) ने सौम्य स्वर से सभा की कर्णशष्कुली अपनी ओर आकृष्ट कर अमृतवृष्टि सी करते हुए तत्कालोचित कर्त्तव्य का उपदेश इस प्रकार किया ॥४८॥

**शुभा घटीयं शुभ एष वासरो फलान्वितं कृच्छ्रतमं च नस्तपः ।**
**यदार्यधर्मे नितरां शुभाशया स्थितिः समेषां भवतां विभाव्यते ॥**

**संकेतः**—शुभाशया शुभहृदयभावा ॥४९॥

यह घड़ी बड़ी शुभ है, यह दिन बड़ा ही शोभन है, और हमारे कठोर तप भी आज सफल हैं, हम आप सबको अतीव शुद्ध चित्त के साथ आर्य धर्म में अवस्थित और मर्यादित जो देख रहे हैं ॥४९॥

**मनुष्यजातिं पुरुषार्थसाधनैर्विधातुमेतां परिपूर्णकामनाम् ।**
**व्यवस्थितिर्यास्ति कृता महात्मभिर्व्यपेक्ष्यते तामवितुं दृढः क्रमः ॥**

संकेतः—पुरुषार्थानां साधनैः सिद्धिभिः ॥५०॥

मनुष्य जाति को पुरुषार्थों की पूर्त्ति के द्वारा पूर्णकाम बनाने के लिए महान् आत्माओं ने जो व्यवस्थाएँ दी हैं उनकी रक्षा करने के लिए एक सुदृढ़ क्रम अपेक्षित होता है ॥५०॥

**नयस्तदर्थं किल दान-सामनी सभेददण्डे समुपास्य योज्यते ।**
**पदेषु तेष्वेव हि सृष्टिरूपिणी प्रवृत्तिशीला सुरभिः प्रवर्त्तते ॥**

संकेतः—दान-साम्नोः साम्नः प्रथमतया प्रसिद्धत्वेपि अर्थरूपस्य दानस्य बलवत्तरत्वात्, सामफलत्वाच्च तस्यैवात्राभ्यर्हितत्वम्, ततश्च प्रथमोपादेयत्वम् । तेष्वेव दानादिष्वेव चतुःसंख्याकेषु पदेषु सृष्टिरूपिणी संसृतिमयी, प्रवृत्तिशीला, निवृत्ति-पराङ्मुखी सुरभिः धेनुः, कामगवी च, प्रवर्त्तते ॥५१॥

उसके लिए 'नय' की योजना की जाती है और उसके लिए साम, दान, भेद और दण्ड को अपनाया जाता है। सृष्टिरूपी प्रवृत्तिधर्मा सुरभि ( कामधेनु ) इन्हीं चार पैरों पर खड़ी होती और चला करती है ॥५१॥

**नयाङ्कुशेनैव, समाज-संस्कृतिः प्रतिक्षणं ध्वंसयमस्य दंष्ट्रिकाम् ।**
**विविक्षुरेषा, विनिवार्यते यतो बिभर्त्ति सत्तामधुनापि शोभनाम् ॥**

संकेतः—दंष्ट्रिकां विविक्षुः नयाङ्कुशेनैव विनिवार्यत इत्यन्वयः । वाच्यप्रवाहात् नात्र विरुद्धमतिकृत्त्वम् ॥५२॥

प्रतिक्षण ध्वंसरूपी यमराज की कुटिल दाढ़ में प्रविष्ट होती जा रही सामाजिक संस्कृति, 'नय'-रूपी अंकुश से ही रोकी जाती रही है और रोकी जा रही है, इसीलिए वह अभीतक विद्यमान है ॥५२॥

**नयः स दीपस्तमसि स्थिताञ्जनान् प्रकाशमार्गे परिचालयेत यः ।**
**तृतीयमुद्भासिततथ्यमान्तरं स एव नेत्रं सततं प्रबोधभाक् ॥**

संकेतः—तथ्यं सत्यम् । सातत्येन प्रबोधभाक्त्वे नेत्रान्तरव्यतिरेकः फलम् ॥५३॥

'नय' ही वह दीप है जो अन्धकार में स्थित व्यक्तियों को प्रकाश के पथ की ओर अग्रसर कर पाता है, और वही है सदा जागरूक रहने वाला, तथ्यों का द्रष्टा, तृतीय आभ्यन्तर नेत्र ॥५३॥

**स दुर्बलानां प्रबलं बलं स वै बलीयसां मत्तमहागजौजसाम् ।**
**मदप्रहाणाय महामृगेन्द्रति प्रशासको येन स एव निर्भयः ॥**

संकेतः—निर्भयत्वमेव प्रशासकस्य प्राणप्रदो धर्मः ॥५४॥

वही है दुर्बलों का प्रबल बल और वही है महागज जैसे अति बलशाली व्यक्तियों का मदशान्त करने वाला महामृगेन्द्र। क्यों? इसलिए कि वह 'नय' ही है निर्भीक प्रकाशक ॥५४॥

**विकासमार्गः स निसर्गजन्मनां गुणावलीनां नृषु भासितात्मनाम्।**
**स एव मृत्युञ्जयभूमिकां प्रति प्रधानसोपानपथः सदोज्ज्वलः ॥**

संकेतः निसर्गजन्मनां सहजानाम्। भासित आत्मा याभिस्तासाम्। सदोज्ज्वलत्वेन तमःस्पर्शस्यैकान्तनष्टत्वमागतम् ॥५५॥

मानव व्यक्तित्व में स्वाभाविक रूप से विद्यमान सद्गुणों के विकास का मार्ग भी वही है और वही है मृत्युञ्जय भूमिका तक पहुँचने के लिए उपयुक्ततम सदा उज्ज्वल रहने वाला सोपान पथ ॥५५॥

**स वीतरागैः परिपूर्णदर्शनैर्महामुनीन्द्रैरुपजीव्य तत्स्मृतीः।**
**भुवस्तले प्राणितुमेषणाभृतां कृते कृतः शाश्वतिकः सनातनः ॥**

संकेतः—वीतरागत्वेन विप्रलिप्सानिवृत्तिः, परिपूर्णदर्शनत्वेन भ्रमपरिहारः। तेषां ताश्च स्मृतीः उपजीव्य, न तु स्वैरतया। सः नयः। शाश्वतिको नित्यः अत एव सनातनः सनातनाख्यः ॥५६॥

उसे वीतराग, परिपूर्णदर्शन, महामुनीन्द्रों ने उनकी स्मृतियों का आश्रय लेकर शाश्वत और सनातन रूप दिया है पृथ्वीतल पर जीने की इच्छा रखने वाले प्राणियों के लिए ॥५६॥

**ऋते नियन्तारमसौ न तत्त्वतोऽध्वरो विनाचार्यमिव प्रतिष्ठते।**
**समित् तु तस्यैव कृतेऽभिकाङ्क्ष्यते हविष्प्रदानामिव मन्त्रिणां बुधैः ॥**

संकेतः—समित् मन्त्रिणां समितिः ॥५७॥

किन्तु यह 'नय' विना किसी 'नियन्ता' के चल नहीं पाता, जैसे आचार्य के विना यज्ञ। मन्त्रियों की परिषदें तो उसी की सहायता के लिए बना करती हैं, ऋत्विक्परिषदों के समान ॥५७॥

**अतोऽत्र दृष्ट्वा भरतेन पादुके समर्पिते स्वाग्रजनेः पदाब्जयोः।**
**गता कथंचिच्छरदां चतुर्दशी यदिष्यते संप्रति तद् विमृश्यताम् ॥**

संकेतः—संप्रति चतुर्दशवार्षिक-दुर्दिनावसाने ॥५७॥

इसलिए १४ वर्षों की चतुर्दशी (तिथि) तो किसी प्रकार बीत चुकी है,

अब आप क्या चाहते हैं ? सोचिए। यह तो आप देख ही चुके हैं कि भरत जी ने अपने अग्रज श्रीराम के चरणों में पादुकाएँ पहना दी हैं ॥५८॥

**उदीर्य तर्कैर्विशदां सरस्वतीं सभामिमां धातृसुतः सुमेधसाम् ।**
**उपाविशत् सूनृतवाग्, बृहस्पतिर्यथा सुधर्मां त्रिदिवे दिवौकसाम् ॥**

**संकेतः**—धातृसुतो वसिष्ठ । सुधर्मा देवसभा ॥५९॥

ब्रह्मदेव के पुत्र और सूनृत वाणी के धनी वसिष्ठजी सुमेधाओं की उस सभा को इस प्रकार की तर्कशुद्ध सरस्वती का श्रवण कराकर उसी प्रकार बैठ गए जिस प्रकार वैसी ही वाणी सुनाकर देवताओं की सभा में बृहस्पति बैठ जाया करते हैं ॥५९॥

**ततश्च रामं प्रति तैः सभाजनैरघोषि तारं सह राजसूनुभिः ।**
**कुलागते राजपदेऽभिषिच्यतां त्रिलोकशोकापनुदेष राघवः ॥**

**संकेतः**—राजसूनुभिः सह सभाजनैरिति सर्वसंमतत्वम् । त्रिलोक-शोकापनुत्त्वेन विनीतत्वम् ॥६०॥

तब सभी राजकुमारों के साथ प्रजाजनों ने तारस्वर में कहा—कुलक्रम से आ रहे राजपद पर त्रैलोक्य का शोक दूर करने वाले श्रीराम ही अभिषिक्त किए जाने चाहिए ॥६०॥

**प्रतिस्वनैः किं च दिशां चतुष्टयी तदेव निर्व्याजशुभं जगौ वचः ।**
**तदेव हेमाम्बुजरेणुभिः समं दिवः प्रतीयाय भुवस्तलं वचः ॥**

**संकेतः**—वचोद्विरुक्तावपि कथितपदत्वमत्र नोदेति वाक्यार्थस्य प्रवाहमयत्वात्, पौनःपुन्येन च तस्यैव समर्थनेनादरातिशयस्य च द्योतनात् ॥६१॥

चारों दिशाओं ने भी प्रतिध्वनि के द्वारा उसी स्वर को बिना किसी छल के शुद्धभाव से दोहराया और वहीं स्वर आकाश से भी पृथ्वीतल की ओर आया, सुवर्ण-कमलों के पराग के साथ ॥६१॥

**स दीर्घिका - वीचि-परिप्लुताम्बुजव्रजे स्वनद्भिश्च मरालिनीसुतैः ।**
**वचोधिदेवीपरिवादिनीमिव प्रवादयद्भिः सदकारि सत्स्वरः ॥**

**संकेतः**—दीर्घिकेत्यादिना मारुतस्य मन्दः संचार आक्षिप्तः। मरालिन्यो मराल-सहिता मराल्यः, तत्सुतैः हंसैः। वचोऽधिदेवी सरस्वती तस्याः परिवादिनी वीणा ताम् । सतां संश्चासौ स्वरश्चेति ॥६२॥

उसी उत्तम स्वर का सत्कार वाग्देवी की वीणा का परिवादन सा करते राजहंसों ने भी किया, वापियों में तरंगों से चञ्चल कमलों के बीच कूज-कूज कर ॥६२॥

**स्वनिष्कुटाभ्यन्तरचारिबर्हिणां विलासलास्यैः सह षड्जवादिनाम् ।**
**मिषाच्च तं ब्रह्मसरः-समुद्भवा-समीपभूमिः सममानयत् स्वरम् ॥**

**संकेतः**—निष्कुटाः समीपस्था आरामाः। ब्रह्मसरो मानसं सरः, तत्समुद्भवा सरयूः, तस्याः समीपस्था भूमिः ॥६३॥

अपने बाह्य उद्यानों में विचरते मयूरों की, विलासपूर्ण लास्य से युक्त षड्ज वाणी के बहाने ब्रह्मसर ( मानस-सरोवर ) से निकली सरयू की तट भूमि ने भी उस स्वर का सम्मान किया ॥६३॥

**दिवा हविर्धूममिषाच्च तत्क्षणं सितातपत्राणमकारि राघवे ।**
**बलाहकैः किं च शरत्समुद्गतैरवीजि वालव्यजनं सुधोज्ज्वलम् ॥**

**संकेतः**—दिवा द्युलोकेन। सितातपत्राणं श्वेतं छत्रम्। वालव्यजनं चामराणि ॥६४॥

उस समय यज्ञधूम के बहाने द्युलोक ने राम के ऊपर श्वेतातपत्र फैला दिया और शरद् ऋतु के मेघों ने सुधा के समान उज्ज्वल वर्ण के चँवर डुलाना आरम्भ कर दिया ॥६४॥

**स्वपुष्कराग्रैः सुरवर्त्मपुष्करं प्रवादयन्तीव च दिग्गजावलिः ।**
**दिशां स्नुतं क्षीरमिवास्य तीर्थजं पयस्तदा वर्षयति स्म शेखरे ॥**

**संकेतः**—स्वं दिग्गजावलिः तस्य यत् पुष्करं शुण्डादण्डः तदग्रैः, सुरवर्त्मेव व्योमैव पुष्करं वाद्यविशेषं प्रवादयन्तीव सती पयो वर्षयति स्म। "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले, व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयो-"रित्यमरः। एतेनाभिषेकमङ्गलमभिव्यञ्जितम् ॥६५॥

अपनी सूँढ़ों के अग्रभाग से आकाश रूपी नगाडे को पीटती सी दिग्गजावली भी श्रीराम के सिरपर दिशा रूपी माताओं के आँचलों से वह निकले वात्सल्यपूर्ण दूध जैसे तीर्थजल बरसा रही थी ॥६५॥

**इति प्रकृत्यैव नृपाभिषेचनं स्वयं तदानीं समपादि राघवे ।**
**ऋचां तदुद्गीथशुभैर्विधानकैर्महर्षिभिः केवलमभ्यनीयत ॥**

**संकेतः**—तत् नृपाभिषेचनम् उद्गीथशुभैः विधानकैः केवलमभ्यनीयत ॥६६॥

इस प्रकार भगवान् राम का राज्याभिषेक स्वयं प्रकृति ने ही संपन्न कर दिया। महर्षियों ने तो ऋचाओं के गान द्वारा उसी का केवल अनुकरण मात्र संपन्न किया ॥६६॥

रघुपतिरिति कृत्यैरात्मनस्त्यागशुद्धै-
र्जनमनसि यथार्थं लब्धवानास्पदं यत् ।
अजनि स खलु सत्यस्तस्य राज्याभिषेको
य इह विधिभिरार्षैर्लौकिकं मङ्गलं तत् ॥६७॥

इस प्रकार भगवान् राम अपने त्याग से उज्ज्वल कार्यों द्वारा जन मानस में जो वास्तविक स्थान पा गए वही था उनका सच्चा राज्याभिषेक। विविध आर्ष विधियों द्वारा जो राज्याभिषेक किया गया वह तो केवल लौकिक मंगल था ॥६७॥

निमिकुलतपसां वा सत्फलं, पुण्यपाको
रविकुलजनुषां वा जानकीत्यार्यलक्ष्मीः ।
व्यरुचदवनिपालस्यार्धभद्रासनस्था
श्रितवपुरिव लोकस्योदयायौषसी श्रीः ॥६८॥

संकेतः—जानकीति जानकीनाम्नी आर्यलक्ष्मीः आर्यावर्त्तवासिनाम् आर्या राष्ट्रश्रीः । भद्रासनं सिंहासनम् ॥६८॥

तब राजा राम के आधे सिंहासन पर विराज रही, निमिकुल की तपस्याओं का सुफल या सूर्यवंशीय महात्माओं के पुण्यों का परिपाक, जानकी नामक आर्य-लक्ष्मी ऐसी लग रही थी जैसे संसार के मंगल विधान के लिए शरीर धारण करके उपस्थित हुई उषःश्री हो ॥६८॥

नरवानरराक्षसास्तदेत्थं जनताया नृपतेश्च भावबन्धम् ।
अभिवीक्ष्य बभूवुरार्यधर्मेऽभ्यधिकं बुद्धिविशुद्धयोऽस्ततर्काः ॥

उस समय जनता और राजा के इस प्रकार के भावैक्य और प्रेम को देख नर, वानर और राक्षस सभी की बुद्धि आर्यधर्म ( आर्यों के उत्कृष्ट धर्म ) के विषय में और अधिक शुद्ध हो गई तथा उसके अनेक तर्क समाप्त हो गए ॥६९॥

इति श्रीमत्सनातनोपाह्व–रेवाप्रसादद्विवेदिकृतौ "सीताचरित"–नाम्नि
सर्गबन्धे राष्ट्रपतिनिर्वाचनं नाम प्रथमः सर्गः ॥१॥

●

# द्वितीयः सर्गः

उपेत्य राज्यं विधिवत् प्रजाजनानुपप्लवेभ्यः परिरक्षयन् महान् ।
स रामनामा भगवान् निजानुजानमंस्त शक्तित्रयविग्रहानिव ॥

**संकेतः**—उपप्लवा उपद्रवाः । परिरक्षयन् परिपालयन् । शक्तित्रयं प्रभावोत्साह-मन्त्ररूपम् ॥१॥

विधिवत् राज्य प्राप्त कर प्रजा की सब प्रकार के उपद्रवों से रक्षा करते हुए उन राम नामक भगवान् ने अपने तीनों अनुजों को ( प्रभाव, उत्साह तथा मन्त्र नामक ) तीनों शक्तियों का मूर्तिमान् शरीर माना ॥१॥

यथा विकीर्णा नभसः पयःकणाः समानमानाः खलु बीजपुष्टये ।
तथा रवेः सा खलु सन्ततिः प्रजाभिवृद्धयेऽभूदपवर्जितान्तरा ॥

**संकेतः**—पयसां जलानां कणा बिन्दवः । रवेः सन्ततिः तद्वंशजाः । अन्तरं भेदः । नभो-जल-पृथिवी-सूर्याणां शिवमूर्तित्वात् परार्थैकपरत्वमाक्षिप्यते । तदुक्तं कुमारसंभवकृता 'विदितं वो यथा कारिचन्न मे स्वार्थाः प्रवृत्तयः । ननु मूर्तिभिरष्टाभि-रित्थंभूतोऽस्मि सूचितः' [ ६.२६ ] । पृथिव्या बीजप्रकृतित्वमपि शाकुन्तलमङ्गले प्रथितमेव-'यामाहुः सर्वबीजप्रकृतिरिति' इति ॥२॥

आकाश से विकीर्ण जलबिन्दु जिस प्रकार भूमि में बोए बीज के परिपोष में समानरूप से सहायक होते हैं, सूर्यवंश के वे बालक भी प्रजा की अभिवृद्धि में उसी प्रकार समानरूप से सहायक सिद्ध हुए ॥२॥

स राघवो भूमिमधिज्यकार्मुको वृषा स वज्री च दिवं ररक्षतुः ।
परस्परं यज्ञहविर्भिरम्बुद-प्रवर्षणैश्चापि समेधितश्रियौ ॥

**संकेतः**—यज्ञहविर्भिरिन्द्रो रामेण समेधितश्रीः, अम्बुदानां प्रकृष्टैर्यथाकालं जातैः वर्षणैरिन्द्रेण रामश्च समेधितश्रीः । अधिज्यकार्मुकत्वेन यज्ञविलोपाभावः वज्रपाणित्वेन मेघानां नियन्तृता, वेदेषु मेघानां वृत्रत्वेन निरूपणात् ॥३॥

ऐसे राम अपना अधिज्य धनुष लेकर भूमि की तथा वैसे ही देवराज इन्द्र अपना वज्र लेकर द्युलोक की रक्षा कर रहे थे। राम इन्द्र को यज्ञ हवि प्रदान करते थे और इन्द्र राम को मेघों की वृष्टि। इस प्रकार दोनों से दोनों की श्रीवृद्धि होती जा रही थी ॥३॥

**सनातनं शाश्वतिकं समाश्रिता प्रकाशमिन्दोरिव शुक्लयामिनी।**
**विपश्चितस्तस्य न हि प्रजा क्वचित् तमःप्रवृत्तिं भजते स्म सत्पथा ॥**

संकेतः—सनातनं तदाख्यं धर्मम्। धर्मो हि बुद्धिमाश्रित्य प्रतिष्ठते। बुद्धेश्च प्रतीकः सूर्यः तेनात्र तदौपम्यमेवोचितम्, तथापि सूर्यस्य तीक्ष्णरश्मित्वेन धर्मेऽपि जनोद्वेजकत्वं मा प्रसाङ्क्षीदिति तस्यैव भासा भासमानेन सौम्येन्दुनात्रौपम्यं घटितम् ॥४॥

विद्वान् राजा राम की प्रजा शाश्वत सनातन धर्म का अनुसरण उसी प्रकार करती थी जिस प्रकार शुक्ल पक्ष की रात्रि चन्द्रमा के प्रकाश का। वह कभी भी तामसी प्रवृत्ति (रात्रि पक्ष में अन्धकार) की ओर अग्रसर नहीं होती थी और बराबर सत्पथ (उज्ज्वल पक्ष) पर ही आरूढ रहती थी ॥४॥

**स धर्मनीत्या विशदेन चेतसा प्रजास्तथाऽतोषयदीश्वरोत्तमः।**
**यथा यमेऽपि व्रजिता अभीततां यथा च कल्पेऽपि गता अयाचिताम् ॥**

संकेतः—चेतोविशदत्वं प्रजातोषश्चेति द्वितयमपि धर्मनीतेः प्रयोजकतयात्र विवक्षितम्। ईश्वरेषु शक्तिमत्सु जनाधिपेषु उत्तमोऽनन्यसदृशः। यमाभीतत्वेन पूर्णा-युष्ट्वं कृतकृत्यत्वं च व्यक्तम्, कल्पे तदाख्ये कामनापूरणे देवतरौ। न याचत इत्ययाची तद्भावमयाचिताम्, एतेन प्रजायाः पूर्णकामत्वमाक्षिप्तम्। 'पञ्चैते देवतरवो मन्दारः पारिजातकः, सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनमि'ति नामलिङ्गानुशासनकृता चतुर्थो देवतरुर्वृक्षोत्तरेण कल्पपदेनोच्यते तथापि तत्रैव देववृक्षान्तरनामवदस्यापि वृक्षपदाघटितस्यैव पदविशेषस्य वाचकत्वमभ्युपेयम् ॥५॥

उस उत्तम ईश्वर ने शुद्ध चित्त से धर्मनीति के द्वारा प्रजा को इस प्रकार संतुष्ट किया कि उसे यमराज से भी भय नहीं रहा और उसे कल्पवृक्ष से भी याचना की कोई आवश्यकता नहीं रही ॥५॥

**तथा च सौराज्यसुखं भुवस्तले स भूमिपालः कृतवान्, यथा दिवः।**
**अमर्त्यभावात् स्खलिता दिवौकसश्चकाङ्क्षुरेतन्निजकर्मभूमिकाम् ॥**

संकेतः—एतत् भुवस्तलम् ॥६॥

भूमितल पर उस राजा ने ऐसा सौराज्यसुख उपस्थित कर दिया कि देवयोनि से लौटते देवताओं ने उसी को अपनी कर्मभूमि बनाना चाहा ॥६॥

**चतुर्षु वर्णेषु तथाश्रमेषु स स्थितिं व्यधात् किं च तथाविधां प्रभुः।**
**यथाऽस्य कृत्स्नापि वशंवदायितं बभार धर्मादिपुमर्थसंहतिः ॥**

और उस प्रभु ने चारों वर्णों तथा आश्रमों की व्यवस्था इस प्रकार से जमाई कि धर्म आदि चारों पुरुषार्थ उसके वशवर्ती जैसे हो गए ॥७॥

**अथैकदार्यः कृतदोहदव्यथां विनोदयिष्यन् स विदेहनन्दिनीम् ।**
**विमानशृङ्गाद् भगवाञ्छ्रियः पतिर्यथैक्षत ब्रह्मसर.समुद्भवाम् ॥**

**संकेतः**—अथ सौराज्यसंपादनानन्तरम् । विमानं सप्तभौमिकं भवनम् । भगवतो विष्णोः श्रियः पतित्वेनोल्लेखात् श्रिया अपि सान्निध्यमागूरितम् । ब्रह्मसरःसमुद्भवा सरयूः ॥८॥

अब, एक बार भगवान् राम गर्भ से व्यथित विदेहनन्दिनी सीताजी का मन बहलाने के लिए अपने सतमंजले प्रासाद से ब्रह्म सर से समुद्भूत सरयू के दर्शन कर रहे थे, लक्ष्मीजी के साथ विमान शृङ्ग पर बैठे लक्ष्मीपति भगवान् विष्णु की नाईं ॥८॥

**तदैव पौरेषु विसर्जितश्चरो विषेण दिग्धो यदि वाऽपरः शरः ।**
**उपेयिवांस्तं रघुवंशकेतनं महाविनाशाय नु धूमकेतनः ॥**

उसी समय रघुवंश के कीर्तिध्वज भगवान् रामके पास पुरवासियों के भाव-परिज्ञानके लिए प्रेषित एक गुप्तचर अथवा ऐसा समझिए कि विषबुझा शर पहुँचा, मानो महाविनाश के लिए कोई धूमकेतु ही हो ॥९॥

**स तं प्रणम्य प्रथमं प्रजेश्वरं जयेति चोक्त्वा समतर्पयत्, ततः ।**
**अनुज्ञया तस्य विशुद्धवर्णया गिरा स्वचेतो व्यवृणोदिति ब्रुवन् ॥**

उसने पहले तो भगवान् राम को झुककर प्रणाम और जय-जयकार कर संतुष्ट किया फिर उन्हीं की अनुज्ञा लेकर विशुद्ध वर्ण वाली वाणी से अपना हृदय खोलना आरम्भ किया, यह सब कहते हुए ॥१०॥

**प्रजाः प्रजानाथ पितेव पालयन् क्षितौ भवान् वा यदि लोचनोत्सवः ।**
**शुचिव्यपाये यदि वा बलाहको द्वयं हि लोकेऽद्य सुधाभिवर्षणम् ॥**

हे प्रजानाथ ! संप्रति संसार भर के लोगों की आंखों के उत्सव हैं—या तो आप या फिर ग्रीष्म के संताप के पश्चात् उपस्थित वर्षा कालीन मेघ। ( आप भी ग्रीष्म संताप के बाद ही प्राप्त हुए हैं) ॥११॥

**शरत्सु हंसा दिवसेषु भास्करः सुधांशुरह्नो विगमेषु दीव्यति ।**
**नृनाथ कालेष्वखिलेषु पावनं यशस्तु ते दीव्यति दीप्रमोजसा ॥**

**संकेतः**—दीव्यति प्रकाशं विकिरति। दीप्रं दीप्तिमत्। राज्ञो यशसि प्रतापोन्मिश्रताया ऐकान्तिकत्वं राजनये प्रसिद्धमपि लोकानुभवसिद्धम् ॥१२॥

हे नृलोकपालक, हंस केवल शरत्काल में ही शोभित होते हैं, सूर्य दिन के ही समय और चन्द्र दिन डूबने पर ही। किन्तु आपका ओज से प्रदीप्त और पवित्र यश सदा सर्वदा शोभित होता रहता है ॥ १२ ॥

**अनुक्षणं काञ्चिदचिन्तितां गतिं प्रयान्ति भूतानि, तथापि, हे प्रभो।**
**धियः परिच्छित्तिमुदस्य तार्किकीमिमानि नैव प्रतियन्ति कुत्रचित् ॥**

**संकेतः**—धियः तार्किकीं परिच्छित्तिमुदस्येत्यन्वयः। प्रतियन्ति विश्वसन्ति ॥ १३ ॥

हे प्रभो! प्राणिजन क्षण पर क्षण एक किसी अचिन्तित गति को प्राप्त होते जा रहे हैं, तथापि, ये बुद्धि की तार्किक परिधि से नहीं हटते और किसी पर भी विश्वास नहीं कर पाते ॥ १३ ॥

**यदीश्वरो मानवमभ्रविस्तृतां मतिं मनश्चापि महाब्धिनिर्भरम्।**
**वितीर्य, कुर्यादविनश्वरं तनौ दुरत्ययेच्छां न तथाप्यसौ त्यजेत् ॥**

**संकेतः**—ईश्वरो यदि अभ्रं व्योम तद्वद् विस्तृतां मतिं सिन्धुनिर्भरं समुद्रगभीरं च मनो वितीर्य प्रदाय मानवं तनौ शरीरे अविनश्वरं कुर्यादित्यन्वयः। तस्य प्रवाहोच्चार्यत्वान्न विरुद्धमतिक्रुत्त्वम् ॥ १४ ॥

ईश्वर यदि मनुष्य को आकाशतुल्य विस्तृत मति प्रदान कर इसका मन भी सिन्धु के समान समृद्ध बना दें और शरीर से भी अविनश्वर कर दें तब भी यह विनाशकारी दुष्ट इच्छाएँ नहीं छोड सकेगा ॥ १४ ॥

**इमां प्रभो वेदितुमीश्वरो हि कः प्रवृत्तिवल्लीं मनसो नृजन्मनः।**
**तटं न यत्रास्ति न वास्ति लक्ष्यभूस्तथापि या हन्त नदीयतेतमाम् ॥**

**संकेतः**—तटलक्ष्यभुवोरभावेऽपि नदीतुल्याचरणं स्वैरताज्ञापकम् ॥ १५ ॥

हे प्रभो! मनुष्यशरीरधारी इस प्राणी की प्रवृत्तिवल्लरी को कौन ठीक से जान सकता है, जहाँ न तो तट है, न लक्ष्य, तथापि जो नदी बनती चलीं जा रही है ॥ १५ ॥

**क्षितौ कियन्तो न बभूवुरीश्वरा विशश्वसुः क्वापि न किन्तु मानवाः।**
**दिलीपतुल्या अपि हन्त भूमिपा गतास्तिरश्चामपि धिक् परीक्ष्यताम् ॥**

**संकेतः**—रघुवंशद्वितीयसर्गाख्यानौपयिकमत्र दिलीपपरीक्षणम् ॥ १६ ॥

पृथ्वी पर कितने राजा नहीं हुए ? परन्तु मनुष्यों ने विश्वास किसी पर भी नहीं किया। यहाँ तक कि दिलीप जैसे राजाओं की परीक्षा ली गई और वह भी तिर्यग्योनि के प्राणियों के द्वारा ॥ १६ ॥

**इति ब्रुवाणो जगदीश्वरस्य यच्चरो निजे न प्रबभूव वाक्क्रमे।**
**बभूव रामः किल तेन शङ्कितो न हि स्थितिस्त्रुट्यति वैशसं विना ॥**

**संकेतः**—स्थितिर्मर्यादा। वैशसमब्रह्मण्यम् ॥ १७ ॥

इस प्रकार यह सब कहते-कहते गुप्तचर अपनी वाणी का संयम खो बैठा तो भगवान् राम को शंका हुई, क्योंकि मर्यादा का उल्लंघन विना किसी अत्याचार या अनर्थ के नहीं होता ॥ १७ ॥

**स शान्तचेताः स्थिरधीः क्षणेन तं प्रसाद्य भृत्यं प्रियदर्शनः प्रभुः।**
**कृपाश्रितैः प्रश्नवचोभिरार्जवादनाविलाचारपथोऽन्वकम्पत ॥**

शान्तचित्त, स्थितप्रज्ञ और निर्दोष आचारपथवाले प्रियदर्शन प्रभु राम ने उस भृत्य को क्षण भर में ही प्रसन्न और स्वस्थचित्त कर कृपापूर्ण प्रश्नवाक्यों द्वारा उसे इस प्रकार अनुगृहीत किया ॥ १८ ॥

**किमन्यदीयैरुत कर्मभिः स्वकैः प्रजासु शङ्का विषवल्लरीयति।**
**प्रसन्नचेता यतबुद्धिरात्मनः प्रभुश्च भूत्वा वद भद्र यद् यथा ॥**

**संकेतः**—विषवल्लरी, विषलता, तद्वदाचरति विषवल्लरीयति। यद् यथेत्य-प्रियमपि सत्यं वदेति भावः ॥ १९ ॥

प्रजा में विषवल्ली के समान फैलती शंका का कारण क्या है। प्रजाजन के साथ किसी बाहरी तत्त्व ने कोई गलत व्यवहार किया है या स्वयं प्रजाजन के ही बीच से किसी ने ऐसा कुछ किया है। हे भद्र ! प्रसन्नचित्त, संयतबुद्धि और संतुलित हो जो जैसा हो उसे उसी रूप में कहो ॥ १९ ॥

**तथानुयुक्तः प्रभुणाऽप्यनीश्वरो निजे विधाय स्थिरतां रहस्यसौ।**
**विदेहपुत्रीं प्रति संशयालुतां विषं यथोद्गीर्य गतो विसंज्ञताम् ॥**

**संकेतः**—तथा पूर्वोक्तेन प्रकारेण अनुयुक्तः पृष्टः। निजेऽनीश्वरोपीत्यन्वयः। विसंज्ञतां मूर्च्छाम् ॥ २० ॥

स्वामी द्वारा इस प्रकार पूछने पर वह गुप्तचर स्वयं पर स्वयं का स्वामित्व न रखते हुए भी किसी प्रकार स्थिर हो एकान्त स्थान में 'विदेहनन्दिनी

( सीता ) के प्रति संशयालुता' की बात विष के समान उगल कर मूर्च्छित हो गया ॥२०॥

**निशम्य दूतेन निवेदिताक्षरं प्रियातिरस्कारमयं वचोविषम् ।**
**घनायसाघातमवाप्य वारिभूर्यथा विदीर्णो बत सोऽपि मूर्च्छितः ॥**

संकेतः—वारिभूः कमलं घनायसम् अयोघनः तदाघातम् । आप्येत्याङ्पूर्वो धातुः । सोऽपि रामोऽपि ॥२१॥

कमल जैसे भगवान् राम का हृदय भी दूत के द्वारा कथित प्रियातिरस्कारमयो अतएव लोहे के घन के आघात जैसी उस विषतुल्य वाणी को सुनकर विदीर्ण हो गया और वे भी मूर्च्छित हो गये ॥२१॥

**गवाक्षलग्नाम्बुरुहाप्तसौरभो मरुत् सरय्वा हृत–पुण्य–सीकरः ।**
**प्रवीज्य तौ सानुशयः प्रियाशयो यथा मुहूर्त्तात् कृतवान् ससंज्ञकौ ॥**

किन्तु सरयू के पवित्र सीकर और गवाक्षों में लगे कमलों की सुगन्ध लेकर बहते तथा प्रिय के सानुशय कर जैसे पवन ने पंखा झलकर उन दोनों को क्षण भर में ही होश में ला दिया ॥२२॥

**विसृष्टदूतो भगवान् स राघवो विलापकातर्यमवाप निस्सहम् ।**
**विरौति चेतो निखिलस्य राक्षसीमवेक्ष्य वृत्तिं प्रियवैशसे रताम् ॥**

तब भगवान् राम ने उस दूत को बिदा किया और उसके चले जाने पर वे इतने कातर हो गए कि विलाप करने लगे। अपने प्रिय को नष्ट करने हेतु उद्यत राक्षसी वृत्ति को देखकर सभी का हृदय व्यथित होता है ॥२३॥

**अहो असंख्यैः कलुषैरुपद्रुतं नृजीवनं राष्ट्रपतिर्न यो नयैः ।**
**व्यशोधयत् तस्य पदोपभोगिनो धिगेव सत्त्वं विजुगुप्सितात्मनः ॥**

अहो, गणनातीत कालुष्योंसे उपद्रवग्रस्त नृजीवन को जिस राष्ट्रपति ने अपने नीति मार्ग से सुधारा नहीं पदमात्र के लिप्सु और अतीव जुगुप्सित हृदय वाले उस ( राष्ट्रपति ) के सत्त्व को धिक्कार है ॥२४॥

**मनोवचःकर्मभिरार्यसंस्कृतिं सदैव या शुद्धतमां मनस्विनी ।**
**निषेवमाणा न बिभेति मृत्युतोऽप्यहो जनस्तामपि हा जुगुप्सते ॥**

आर्यों की सदा ही विशुद्ध बनी रहने वाली संस्कृति का जो मनस्विनी सदा ही मन, वचन और कर्म से सेवन और रक्षण करती रहती है और जो मृत्यु से भी नहीं डरती, आह, लोग उसकी भी निन्दा कर रहे हैं ॥२५॥

**ममैव किन्त्वत्र परिच्युतात्मनस्त्रुटिर्यदेषा जनतास्त्यशिक्षिता ।**
**पितुः स दोषः शिशुरत्ति यद् विषं भिषग्घि वाच्यो यदि वर्धते रुजा ॥**

किन्तु इसमें अपराधी मैं ही हूँ। मेरी ही है त्रुटि कि मेरी जनता शिक्षित नहीं है। बच्चा यदि विष खाता है तो यह दोष पिता का ही होता है और रोग यदि बढ़ता है तो उसमें निन्दा वैद्य की ही होती है ॥२६॥

**कथं नु रक्षो-गृह-वास-दौर्भगं स्वतःप्रमाणं, न च वह्निशोधनम् ।**
**अवैमि नष्टो वपुषाप्यनङ्गवज्जनान्तरङ्गेषु कृती स रावणः ॥**

यह कैसी बात कि रावण के घर रहने का दुर्भाग्य तो स्वतःप्रमाण ( विना प्रमाण के सबको मान्य ) है, किन्तु अग्निशुद्धि नहीं। लगता है शरीर से नष्ट हो जाने पर भी वह रावण लोगों के मन में अभी भी सक्रिय है अनंग ( कामदेव ) के समान।

**कृते ममैषा नृपमन्दिरादितो वनान्यपि प्रीततराण्यमन्यत ।**
**निनाय या ताः शरदश्चतुर्दश प्रसन्नमुद्रैव फलैरुपोषितैः ॥**

**संकेतः**—मम भर्तुरित्यर्थः। प्रीततराणि प्रेयांसि। त्रयोदशवर्षाणि फलैः, लङ्कायामेकं वर्षं च उपोषितैः सततमुपवासैः। प्रसन्नमुद्रेति सीताया मनःकर्मणोरैक्यम्। अनेन सीताचारित्र्यस्य जनतागतं प्रत्यक्षमदर्शि ॥२८॥

जिसने मेरे लिए इस राजप्रसाद की अपेक्षा वनों को भी अधिक प्रिय माना, और जिसने १४ वर्षों की अवधि फलों और उपवासों से हँसते-हँसते विताई ॥

**अदर्शि या चीरधरापि केनचित् कदापि धीरा न दुकूलकाङ्क्षिणी ।**
**ममाङ्गरक्षां सततं समन्ततः प्रतिक्षणं या विदधे च ताः समाः ॥**

**संकेतः**—चीरधारण–पतिशरीररक्षाभ्यां च दुर्जातावप्यशिथिलपातिव्रत्यमनुमानविषयः ॥२९॥

चीर धारण करने पर भी जिस धीरचित्ता को किसी ने भी कभी भी दुकूल के लिए इच्छुक नहीं देखा, जो मेरे शरीर की रक्षा सब प्रकार से सदा ही उतने वर्षों तक प्रतिक्षण करती रही ॥२९॥

**हनूमता किंच सताऽधिसिंहलं चरित्रशुद्धावचला निरूपिता ।**
**अहो प्रमाणत्रितयेऽपि मे प्रजा विरुद्धबुद्धिः कलिकालगा यथा ॥**

**संकेतः**—सता आप्तेन अधिसिंहलं लङ्कायां विषमतमायामपि स्थितावित्यर्थः, चरित्रशुद्धा निरूपिता वर्णिता। यथा—"शीलमासाद्य सीताया मम च प्रीणितं मनः"

[ सुन्दरे काण्डे ]—इति। एतेत शब्दप्रमाणमुक्तम्। प्रमाणत्रितयेपि विरुद्धबुद्धिरिति चार्वाकतोऽपि गर्हितत्वम्। कलिकालेति भगवतो रामस्य युगान्तरे जातत्वात् ॥३०॥

और सत्पुरुष तथा विद्वान् हनुमान् ने सिंहल में भी चरित्रशुद्धि में अविचलित पाया और बतलाया। अहो, मेरी प्रजा तीनों ही प्रमाणों के विरुद्ध हैं, कलिकाल की प्रजा के समान ॥३०॥

**अहो यया प्रीतिपुरस्सरं तथा गतेन कालेन वनं गृहीकृतम्।**
**जनैस्तिरस्कारवचोभिरद्य सा श्रवोविषैर्हन्त पुरश्चिकीर्ष्यते ॥**

संकेतः - तावतेति सुदीर्घत्वम्। श्रवसोः कर्णयोः विषैः दाहकैः ॥३१॥

इस सती ने तो बीते हुए उतने वर्षों तक प्रेम पूर्वक वन को भी घर बनाया और जनता चाह रही है उसे कानों के लिए विष के समान तिरस्कार के शब्दों से पुरस्कृत करना ॥३१॥

**अहो विधातः कथमीदृशो ग्रहः सुरापगा–पावक–तुल्य–जीविताम्।**
**मदेकचित्तामघ–मारुतैरिमां लतामिवाक्षेपयसे मम प्रियाम् ॥**

संकेतः—ग्रहः हठः। सुरापगा गङ्गा, पावको वह्निः तत्तुल्यं जीवितं यस्याः ताम्, तुल्यत्वं च विकश्मलत्वेन। अघानि मारुता इवेति प्रियापक्षे, अघानीव मारुता इति च लतापक्षे। ममेत्यर्थान्तरसंक्रान्तं ममत्वाधिक्यद्योतनं च पदम् ॥३ ॥

हे विधाता! यह कैसा आग्रह कि गंगा और अग्नि के समान विशुद्ध चेतना की मेरी, केवल मुझपर ही केन्द्रित चित्त वाली, प्रिया को पापशंका के झँकोरों से लता की नाईं झकझोर रहा है तू ॥३२॥

**अयि प्रिये, वैशसदारुणे मयि प्रतीतभावे ऋजुतापरिप्लुते।**
**क्व ते विगानग्लपितं सतीव्रतैर्विशुद्धमेतद् वपुरत्र शोत्स्यते ॥**

संकेतः—प्रिये इति संबोधनम्। अहं वैशसदारुणः, त्वं च प्रतीतभावा विश्वस्तचित्तेति स्वस्य गर्हितत्वं प्रियायाश्चार्यत्वं व्यञ्जितम्। विगानं निन्दा। सतीव्रतैरिति बहुवचनेन विशुद्धमिति सोपसर्गेण शुद्धिवचननेन पुनःशुद्धिसंभवोऽपहस्तितः। अत्र लोके शोत्स्यते शुद्धं भविष्यति ॥३३॥

अपकार के लिए दारुण मुझ पर भी विश्वस्तचित्त और भोलेपन से स्निग्ध हे प्रिये! सतीव्रतों से पवित्र होने पर भी जनापवाद से कलुषित तुम्हारा यह शरीर इस लोक में अब कहाँ पवित्र होगा ॥३३॥

**किमत्र कार्यं विपरीतताकटुः स्थितिः समक्षं मम संप्रति स्थिता ।**
**त्यजानि किं, किं स्वचितिं, जनानथो, विशानि वह्नौ यदि वाद्य वारिधौ ॥**

**संकेतः**—चितिपदेन सीताया अध्यवसायः, तेन तस्या दयिततमत्वम् । वह्नि-वारिधीति पक्षद्वयगत्योभयत्राप्यक्षेम इति ॥३४॥

मुझे क्या करना चाहिए । मेरे समक्ष इस समय वैपरीत्य से कटु स्थिति उपस्थित है । क्या करूं ? अपनी चेतना को छोड़ूँ या जनता को, आग में कूदूँ या समुद्र में ॥३४॥

**समाजधर्मः स्थित एकतोऽन्यतः स्थिता च वैयक्तिकता पुरोऽद्य मे ।**
**उदस्यतामत्र लता, द्रुमोऽथवा, परस्पराश्लिष्टतमात्मनोर्द्वयोः ॥**

**संकेतः**—द्वयोरिति सामान्येन निर्देश । तेन लतावृक्षयोरिव व्यष्टि-समष्ट्योरपि परस्परोन्नद्धत्वमायातम्, तदेव च भारतीयायाः संस्कृते-र्जीवितसर्वस्वम् ॥३५॥

एक ओर समाजधर्म का प्रश्न है और दूसरी ओर मेरे वैयक्तिक अस्तित्व का । परस्पर में अत्यन्त आश्लिष्ट इन दोनों में लता को छोड़ूँ या द्रुम को ॥३५॥

**तदेत्थमन्तश्चलमस्य वैशसाद् ययौ विभोरुत्तरकोसलौकसाम् ।**
**प्लवत्वमब्धौ तरले प्रभञ्जनात् सरोरुहत्वं यदि वा सरोवरे ॥**

**संकेतः**—अन्तः अन्तःकरणम् । विभोः व्याप्तमहिम्नः प्रभोः । प्रभञ्जनात् तरलत्वं पयोधाविव योगशक्त्या सरोवरेऽपि योजनीयम् ॥३६॥

उस समय उत्तरकोसल की जनता के स्वामी श्रीराम का अत्याचार के आघात से विचलित चित्त ऐसा लग रहा था जैसे प्रभञ्जन से तरल समुद्र में नौका या उसी प्रकार के सरोवर में कमल ॥३६॥

**स वृक्षवृत्तिर्जनताकृते प्रियां लतामिव त्यक्तुमनास्ततोऽभवत् ।**
**भवन्ति चेतांसि महात्मनां सदा परार्थसंपादनसौख्यभाञ्जि वै ॥**

अन्त में वृक्षतुल्य राम ने लतातुल्य प्रिया को ही छोड़ने का निर्णय लिया । महान् आत्माओं के चित्त सदा दूसरों के हित में ही जो सुख पाते हैं ॥३७॥

**ततः सतीं तां स्व-विकार-मूर्च्छितां महागजः पङ्कजिनीं यथा वहन् ।**
**सभागृहं प्राप स पूरुषोत्तमो विसर्गरङ्गं नु महानटोत्तमः ॥**

**संकेतः**—स्वं श्रीरामः तद्विकारः सीतापक्षे तद्ग्लानिः पङ्कजिनीपक्षे

स्वं गजः, तद्विकारो मत्तता, तज्जनितो विकारो विमर्दादिर्वा। विसर्गरङ्गः प्रलय-ताण्डवमञ्चः। नटोत्तमः शिवः "महावराहो धारिणी"—मित्यपि वक्तुं शक्यते तथापि परित्यागवैशसद्योतनाय गजकमलिनीसाम्यमेवान्तरङ्गतमम्। वराहेण हि रक्षितुं धरणी समुद्धृता न नाशयितुम् ॥३८॥

तब अपनी [ श्रीराम की ] विक्रिया को देख मूर्च्छित उस सती को भगवान् राम ने उठाया जैसे महागज उठा लेता है कमलिनी को। और पुरुषोत्तम वे सभागृह पहुँचे जैसे आदि नटेश्वर ( शिव ) प्रलयकालीन मंच पर पहुँचते हैं ॥ ३८ ॥

**ततश्च मातृरनुजोत्तमांश्च तान् समाह्वयत् तत्क्षणमेव राघवः।**
**निजस्य सर्गस्य निवेदनाय यन्न धर्मकृत्ये रघवो विलम्बिनः ॥**

वहाँ पहुँच कर उनने सभी भाइयों के साथ सभी माताओं को अपने निर्णय का निवेदन करने के लिए तुरन्त आने का सन्देश भेजा, क्योंकि रघु के वंशधर धर्म-कार्य में विलम्ब नहीं किया करते ॥ ३९ ॥

**अनर्थ-शङ्काकुल-मानसस्ततः सुतैः समेतो जननीजनः क्षणात्।**
**सभागृहं वीचिचयः सहाम्बुजैस्तटं यथा मारुतमूर्च्छितोऽभ्यगात् ॥**

**संकेतः**—बिम्बप्रतिबिम्बभावमूला पूर्णोपमा। मूर्च्छितो वेल्लितः। उभयमपि प्रकृतमेवात्र ग्राह्यमुपमेयोपमानयोः, तेन चानिष्टलक्षणमपि संगृह्यते ॥ ४० ॥

अनर्थशंका से आकुलचित्त माताएँ भी पुत्रों के साथ तत्काल सभागृह पहुँची, जैसे पवनवेग से आकुल तरंगे कमलों के साथ तट पर पहुँचती हैं ॥ ४० ॥

**अमी विभान्ति स्म तथा विशङ्कया विवर्णदेहा नरनाथबन्धवः।**
**विभान्ति पार्श्वे शशिनो यथा ग्रहाः समुज्जिहाने निशि धूमकेतने ॥**

**संकेतः**—बन्धुपदेन भ्रातरो मातरश्चेति द्वितयेऽपि ग्राह्याः। विशङ्कापि स-विशाल-पुच्छो मनःप्रकाशः ॥ ४१ ॥

राजा राम के इन सम्बन्धियों के देह शंका से विवर्ण हो रहे थे। वे ऐसे लग रहे थे जैसे चन्द्रमण्डल के पास के ग्रहगण लगा करते हैं धूमकेतु के उदय के समय ॥ ४१ ॥

**सशङ्कमेते मिलिताश्च तद्गृहे तथैव रामेण तटस्थचेतसा।**
**यथा महेन्द्रप्रमुखाः सुराः सतीवियोगिना दक्षगृहे पुरारिणा ॥**

सशंक ये सब तटस्थचित्त राम से सभा गृह में उसी प्रकार मिले जिस प्रकार सती से वियुक्त त्रिपुरारि शिव से दक्ष प्रजापति के मण्डप में इन्द्र आदि मिले थे ॥ ४२ ॥

**तटस्थवृत्तिश्च स तेषु राघवस्तथा बभासे निजबन्धुषु स्थितः।**
**यथा स कश्चित् पुरुषोऽवभासते गुणेषु सांख्ये महदादिभिर्वृतः ॥**

**संकेत**—बध्नातीति व्युत्पत्त्या बन्धुपदं महादादिष्व.प सार्थकम्, तैरपि ज्ञरूपस्य पुरुषस्य व्यक्ताव्यक्तत्वमुपेयिवद्भिरेवंविधा बन्धुता सांख्यशास्त्रे लभ्यत एव। तत्र "प्रकृतेर्महान्"—इति कारिकावचनान्महत्पदेन प्रकृतेः प्रथमो विकारो बुद्धिर्ग्राह्यः तस्य व्यक्तत्वेन तत्कृतस्य बन्धनस्य सुगमत्वात् अव्यक्तायाः प्रकृतेरत्रानुपादानम्। आदिपदेन अहंकारः, तन्मात्राः, इन्द्रियाणि, भूतानि चात्र ग्राह्याणि। यदुच्यते भगवतेश्वरकृष्णेन—प्रकृतेर्महांस्ततोऽहंकार इत्यादि ॥ ४३ ॥

तटस्थचित्त राम भी अपने बन्धुओं के बीच ऐसे लग रहे थे जैसे महत्तत्त्वादि से परिवृत कोई पुरुष गुणों के बीच लगता है सांख्यदर्शन में ॥ ४३ ॥

**विपक्वगर्भां च वधूं दृगम्बुभिर्निजैः ससंज्ञां च निरीक्ष्य मातरः।**
**निशश्वसुर्मुष्टिमतीं यथा महीं तरङ्गितां वीक्ष्य कृषाणचेतनाः ॥**

**संकेतः**—मुष्टिः परिपक्व-शुष्कं सस्यं "फसल"—शब्दवाच्यम्। शोकस्थित्यै कृषकपक्षेऽवग्रह आक्षेप्यः ॥ ४४ ॥

माताओं ने, परिपक्व गर्भ वाली और अपने अश्रु बिन्दुओं से होश में आई वधू को देख आश्वासन की साँस उसी प्रकार ली जिस प्रकार फसल से भरी भूमि को तरंगित देख किसान की चेतना लिया करती है ॥ ४४ ॥

**कृतप्रणामान् विहिताशिषश्च तान् यथायथं संश्रितविष्टरानपि।**
**कथंचिदुद्धूतविवासवेदनाननिष्टभीतिर्न हि भाषितुं ददौ ॥**

**संकेतः**—तान् रामादीन् ॥ ४५ ॥

प्रणाम और आशीर्वाद की प्रक्रिया पूरी कर आसनों पर बैठ जाने के बाद भी उन सबको अनिष्ट शंका ने बोलने नहीं दिया। उनने वनवास की वेदना को किसी प्रकार अभी-अभी जो दूर किया था ॥ ४५ ॥

**ततः कथंचित् कुलिशान्तरात्मतामवाप्य तेभ्यो मितसारवाक्पतिः ।**
**न्यशामयद् दूतमुखेन यच्छ्रुतं स्ववंशकौलीनविषं विशांपतिः ॥**

संकेतः—विशांपतिः नृपतिः श्रीरामः । कौलीनं जनप्रवादम् ॥ ४६ ॥

तब हृदय को वज्र बनाकर, मित किन्तु सारपूर्ण वाणी के धनी विशांपति ( राजा राम ) ने किसी प्रकार उन्हें वह सुनाया जो स्वयं उनने दूत से सुना था ॥ ४६ ॥

**स वाग्विसर्गो विदधे विदारितान्तरान् समस्तानपि तान् सभासदः ।**
**भवन्ति कारुण्यवतां वपुर्भृतां मनांसि संवादशुभानि सर्वदा ॥**

संकेतः—संवादः समानोऽनुभवः ॥ ४७ ॥

उस वाग्विसर्ग ने उन सभासदों के हृदयों को टुकड़े-टुकड़े कर दिया। करुण चित्त वाले शरीरियों के चित्त सदा ही दूसरे के दुःख-सुख में दुःखी-सुखी होने वाले जो होते हैं ॥ ४७ ॥

**निपीडिताः कर्णकुटीषु तद्वचोऽनलेन सर्वा अपि राममातरः ।**
**अमूमुहन्नन्तरतीतपन्नथो व्यलीलपन्नेवमुदस्तसंविदः ॥**

उस वाणीरूपी अग्नि से कर्णविवरों में अत्यन्त पीडित राम-माताएं बार-बार मूर्च्छित होती रहीं, उत्तरोत्तर अधिक सन्तप्त होती गई और धैर्य खो कर इस प्रकार विलाप करने लगीं ॥ ४८ ॥

**कथं विधातर्घनसारसन्निभामिमां कुलं शोधयितुं स्नुषामदाः ।**
**कथं च तत्राग्निनिभं विपद्व्रजं विधातुमेतान् महतो ग्रहानगाः ॥**

संकेतः—घनसारः कर्पूरम् । कर्पूरधूपेन शुद्धिः प्रसिद्धा । ग्रहान् हठान् ॥४९॥

विधाता ! तूने कपूर के समान कुलपावन पुत्रवधू क्यों दी और दी तो उस पर विपत्ति पर विपत्ति की अग्नि छोड़ने का हठ क्यों दूर तक पकड़े हुए है ॥ ४९ ॥

**निषेकपाकं धरिणी वृषाकपेर्यथात्मजस्यास्य बिभर्त्ति मे वधूः ।**
**विधेऽत्र वृत्रासुरवत् कथं ततः कलङ्कवर्षोपलमाः सिसृक्षसि ॥**

संकेतः—निषेको गर्भः । वृषाकपिरिन्द्रः । वृत्रासुरो मेघः ॥ ५० ॥

यह मेरी बहू, इन्द्र के अंश को भूमि के समान मेरे पुत्र के परिपक्व अंश को धारण किए हुए हैं। विधाता तू इस पर वृत्रासुर के समान कलंक के ओले क्यों बरसाना चाह रहा है ॥ ५० ॥

**क्व भूतधात्र्या दुहिता स्नुषा च मे, प्रतीपभावा क्व च तादृशी कथा।**
**उपांशु वल्ली न विषं, न चन्द्रिका तमो, न गङ्गा कलुषायितं, भजेत्॥**

संकेतः—भूतधात्री पृथिवी। मे ममेत्यर्थान्तरे संक्रान्तम्। सौरभ्यप्रकाश—शुद्धि विकिरन्त्यो मल्ल्यादय उपांशु रहसि वैपरीत्यं न भजेरन्निति भावः॥ ५१॥

कहाँ यह भूतधात्री पृथिवी की बेटी और मुझ जैसी की बहू, और कहाँ वह उल्टी बात। एकान्त में लता विष नहीं अपनाती, न तो चन्द्रिका अन्धकार को और न गंगा कालुष्य को॥ ५१॥

**मरुस्थली सोर्वरतामुपेयुषी चिरेण मे पुत्र–वधू–युगेक्षणात्।**
**कलङ्कदुष्काल इमां पुनः कथं विधे समुज्ञासयितुं प्रवर्तितः॥**

संकेतः—सा विवासकालविकराला। दुष्कालोऽवग्रहः। समुज्जासयितुं नाशयितुम्, हिंसायाम् चौरादिको धातुः॥ ५२॥

बहू और बेटे के जोड़े को निहार कर मेरी वह मरुस्थली बहुत दिनों के बाद उर्वर हुई थी। विधाता! इसे उजाड़ने के लिए तूने फिर से कलंक का अकाल क्यों उपस्थित कर दिया॥ ५२॥

**इयं विमर्द्दे वकुलावली यथोत्तरोत्तरं सौरभमेव मे वधूः।**
**सृजत्यसौ चेत् कलुषा ततः शुचिर्जगत्त्रये का नु पतिव्रता भवेत्॥**

संकेतः—वकुलः मौलिश्रीः मोलसिरीति—नाम्ना व्यपदिश्यमानं केसर-पुष्पं तदावली। केसरं हि परिशुष्कमपि न विक्रियते, अभ्युक्षणेन हरितायते चेति प्रसिद्धमेव॥ ५३॥

विपत्तियों द्वारा मसली जाने पर भी मेरी यह बहू वकुलमाला सी सुगन्ध ही उत्तरोत्तर बिखेरती आई है। यदि यह कलुषित है तो संसार भर में कौन सी पति-व्रता पवित्र होगी॥ ५३॥

**सुतोऽस्ति मे पङ्कजकोश एष मे वधूरियं तत्र च माधवो स्रुतिः।**
**अरातिभृङ्गस्य पदेन कीदृशस्तयोर्विभेदो विपरीततापि वा॥**

संकेतः—अरातिः शत्रुः, स चात्र रावणः। तद्रूपस्य भृङ्गस्य पदेन चरणेन स्थानेन च। बलादपहरणकाले रावणेन सीताशरीरस्य स्पर्शाद् इयमुक्तिः॥ ५४॥

मेरा पुत्र कमलकोष है और मेरी यह बहू है उसमें मकरन्दधारा। शत्रु रूपी भौरे ने इसे यदि अपने पद (स्थान, पैर) से छू दिया तो उससे इसमें कैसा भेद और कैसी विपरीतता?॥ ५४॥

**कृपीटयोनौ प्रतिमेव हैमनी न कृच्छ्रयातापि सती विवर्ण्यते ।**
**अथास्ति या वल्लभमीदृशं श्रिता शिवं कलेन्दोरिव तत्र का कथा ॥**

**संकेतः**—कृपीटयोनिः अग्निः । हैमनी सुवर्णनिर्मिता ॥५५॥

अग्नि में सुवर्णप्रतिमा के समान सती स्त्री विपत्ति में पड़कर भी कभी कलुषित नहीं ठहरती, फिर जिसका पति ऐसा हो, चन्द्रकला के लिए शिव जैसा ॥५५॥

**प्रभा प्रदीपादिव रामजीवनादपैति सा चेदतिपेशलाशया ।**
**तदाऽऽर्यपुत्रात् प्रथमं विनाकृतं कुलं रवेः को नु परः प्रकाशयेत् ॥**

**संकेतः**—आर्यपुत्रो दशरथः रवेः कुलं परो रविभिन्नः ॥५६॥

यदि अतीव कोमलचित्त की मेरी यह बहू प्रदीप से प्रभा के समान राम के जीवन से दूर होती है तो आर्यपुत्र ( दशरथ जो ) से भी विछुड़े इस वंश को सूर्य के सिवाय दूसरा कौन प्रकाशित कर सकेगा ॥५६॥

**क एष मार्गो निजरक्षणे जनो धृतव्रतं दूषयते निजाधिपम् ।**
**किमत्र कार्यं भगवानुषर्बुधो भवेद् दिधक्षुर्यजमानमेव चेत् ॥**

**संकेतः**—उषर्वुधो वह्नि । स चात्र यजमानपदसाहचर्याद् यज्ञीयः ॥५७॥

यह कौन सा रास्ता है कि अपनी रक्षा में निरत अपने स्वामी को जनता दूषित ठहराए । किन्तु भगवान् अग्निदेव यदि यजमान को हीं जलाने दौड़े तो क्या किया जा सकता है ? ॥५७॥

**इति शकलितचित्तास्तास्तथैवानुजाता-**
**नविरलगलिताश्रूंल्लोकनाथः स दृष्ट्वा ।**
**स्वयमपि निजसर्गं वक्तुमीशां न चक्रे**
**भवति हृदयभूमौ मानवो मानवो हि ॥**

**संकेतः**—ताः जननीः अनुजातान् भ्रातॄन् लोकनाथो राजा रामः सर्गं निश्चयं वक्तुं न ईशांचक्रे । व्यवहितप्रयोगस्य कालिदासाश्वघोषादिषु प्रचलितत्वात्, अपाणिनीयत्वेऽपि न क्षतिः । "ईशो न जात" इत्यादेः पाठस्यापि संभवे तथा प्रयोगो व्यवहारसौभाग्यमभिप्रेत्यैव कृत इति मन्तव्यम् ॥५८॥

इस प्रकार टूटे हृदय की माताओं और वैसे ही सभी ( रामके ) अनुजों को अविरल अश्रुपात करते देख वे लोकनाथ ( प्रजापालक राम ) भी ( सीता परित्याग

का ) अपना निश्चय व्यक्त नहीं कर सके। हृदय-क्षेत्रमें मानव, अन्ततः, मानव ही हुआ करता है ॥५८॥

मनसि विधृतमोहा सा सभा राघवाणा-
मपि वचसि तदासीदङ्कवीणेव मूका ।
न हि भवति मनुष्यस्यान्तरङ्गे निवासी
विकृतिषु परमात्मा पक्षपाती मृषासु ॥५९॥

**संकेतः**—वीणा अङ्कमारोप्यते चेत् तदुद्देश्यं वर्णपरिचयः स्वरसंयोग एव वा भवति। तर्हि सत्यामपि स्वसंयोगस्पृहायां यथा तस्या मूकता विवक्षोन्मिश्रा भवति तथैव प्रकृते। मृषासु अलीकासु। अव्ययत्वाविवक्षायमेवं प्रयोगः ॥५९॥

राघवों की वह चित्त में मोह से भरी सभा उस समय वाणी से भी मूक थी, अंकवीणा की नाँई। मनुष्य के भीतर बैठा परमात्मा झूठे विकारों का पक्षपाती नहीं होता ॥५९॥

अथ रघुपतिजायैवात्मदेवस्य साक्ष्या-
ज्झटिति विमलचेता निश्चिकाय स्वधर्मम् ।
वदितुमथ च धैर्यात् किञ्चिदाकुञ्चिताक्षी
धृततनुरिव काशी प्रक्रमं सा चकार ॥

**संकेतः**—आत्मा हि देवः। अक्ष्याकुञ्चनेन विवेकबुद्धिरनुभाव्यते। काश्यौपम्येन च तस्या एव पोषः ॥६०॥

तब भगवान् राम की विमलचित्त धर्मपत्नी सीता ने ही अपने आत्मदेवता की साक्षी पर अपने कर्त्तव्य ( स्वधर्म ) का निश्चय किया, और शरीरिणी काशी जैसी उसने धैर्यपूर्वक बोलना आरम्भ किया किञ्चित् आकुंचित नेत्रों के साथ ॥

इति सनातेनोपाह्व-श्रीमद्-रेवाप्रसादद्विवेदिकृतौ सीताचरित—नाम्नि
सर्गबन्धे जानकीकौलीनं नाम द्वितीयः सर्गः ॥ २ ॥

❀

# तृतीयः सर्गः

**सा निसर्गमधुरस्वरा ततः सत्यहेम्नि लिखितेव देवता।**
**आजहार हृदयानि भाविनी बान्धवस्य पटुभाषिणी सती॥**

**संकेतः**—लिखिता उत्कीर्णा। हेम्नि नष्टे यथा तल्लिखिता मूर्त्तिरपि नश्यति, तथैव सत्ये नष्टे सीताया अपि नश्वरतात्र गम्या॥ १॥

सत्य के सुवर्ण पर बनी देव प्रतिमा जैसी, निसर्गमधुर स्वर वाली, भावभरित तथा भाषणपटु सीता ने अपने पटु भाषण से उपस्थित बन्धुजनों के हृदय आकृष्ट कर लिये॥ १॥

**तामवीवददनल्पतापिनी लोकनाथहृदयस्य विद्रुतिः।**
**स्वं परीत्य जगति प्रसर्पिणी कापि रात्रिरिव चक्रवल्लभाम्॥**

**संकेतः**—लोकनाथो रामः विद्रुतिः शोकक्षोभजनिता द्रवता, वैशसरूपो विद्रवश्च। स्वं सीतां परीत्य परिवेष्ट्य विषयीकृत्येति यावत्। पक्षान्तरेऽपि रात्रिः तदैव संतापयित्री भवति यदा सा चक्रवाकं दूरीकुर्वती चक्रवाकमपि परिवेष्टयति जगति प्रसर्पति च॥ २॥

सीता को ( स्वयं कुछ भी नहीं कहना था किन्तु उन्हें ) लोकनाथ राजा राम के हृदय की द्रुति ने कहने को बाध्य किया जैसे चक्रवाकी को बाध्य करती है, उसे आवृत कर संसार में फैलती रात्रि॥ २॥

**द्यौर्न नीरदभरच्युतां विना विद्युतं श्रयति शब्दकारिताम्।**
**नैव मारुतविसर्पणादृते रौति कापि च मरालमानिनी॥**

**संकेतः**—मरालमानिनी हंसी॥ ३॥

द्यौ मेघ से बिजली गिरने पर ही बोलना पसंद करती है और मरालवधू ( हंसी ) आँधी आने पर ही॥ ३॥

**साऽब्रवीत्-- प्रतिहतेन चक्षुषा सर्वथा स्वतमसाऽत्र मानुषः।**
**वीक्षते परपरिस्थितिं परं, वीक्षते न पर–धर्म–दर्शने॥**

**संकेतः**—स्वतमसा प्रतिहतेनेत्यन्वयः। परिस्थितिः लोकगता समविषमस्थितिः। सीतायाः लङ्कावासः परिस्थितिरेव। परस्य परे चेति, धर्मदर्शने तद्द्वयी। दर्शनं हि धर्मस्य प्रभवभूः। चक्षुःपदेनात्र स्वदर्शनं गम्यते॥ ४॥

सीता ने कहा—मनुष्य अपने भीतरी अन्धकार से आवृत नेत्रों से दूसरों की बाह्य परिस्थितियों को तो देखता रहता है, किन्तु दूसरे के उत्कृष्ट धर्म और दर्शन को नहीं देख पाता ॥ ४ ॥

**वीक्षते यदपि सूर्यबिम्बतः शैत्यमुद्भवति नैव जातुचित् ।**
**एवमेव न निशीथिनीपतेः क्वापि नश्यति तुषारशीतता ॥**

संकेतः—वीक्षते मानव इति पूर्वानुवर्ति ॥ ५ ॥

वह देखता है कि सूर्यबिम्ब से कभी भी शीतलता उत्पन्न नहीं होती और चन्द्रबिम्ब की हिमशीतलता छूटती नहीं ॥ ५ ॥

**किन्तु विश्वसिति दूषणं प्रमापूतमेव जनता स्वतः सदा ।**
**तोयजं भवति पङ्कजं हि तन्मानसे श्रयदपि प्रभां रवेः ॥**

संकेतः—दूषणं स्वतः प्रमापूतं प्रमाणमिति भावः । कमलं हि जलादुत्पद्यते, न पङ्कात्, नालमात्रस्य पङ्कादुत्पन्नवात् । ततश्च पङ्कोत्पन्नत्वमस्य वितथमेव । यच्च तथ्यं तद्धि तस्य सूर्यप्रभाभासुरत्वम् । तदाश्रित्य केनापि कमलं न व्यपदिश्यते ॥ ६ ॥

किन्तु जनता दोष को ही स्वतः प्रमाण मानती है । उसकी दृष्टि में ( अपनी नाल से उत्पन्न ) कमल एकमात्र पंकज ( पंक से उत्पन्न ) ही रहता है जब कि वह जल से भी उत्पन्न रहता है और सूर्यप्रभा को भी अपनाए रहता है ॥ ६ ॥

**विश्वसेदथ न वापि विश्वसेल्लोक एष विदुषे ततो न भीः ।**
**स्वं प्रमाणयति कृत्यदर्शने सम्भवेन्न सुजनेऽन्यनेयता ॥**

संकेतः—स्वं स्वान्तरात्मानं प्रमाणत्वेन स्वकुर्वति सुजने संस्कारवति शिष्टे ततो नाव्यवस्थाभीः । अन्यनेयता परानुशिष्टिसापेक्षता ॥ ७ ॥

कोई विश्वास करे या नहीं, विद्वान् को कोई भय नहीं होता । कर्त्तव्य दर्शन में अपनी आत्मा को प्रमाण मानकर चलने वाले उत्तम व्यक्ति के लिए किसी अन्य के निर्देश पर चलना संभव नहीं होता ॥ ७ ॥

**किन्तु देव ! यदि सौख्यवारिभिः शीतमस्ति तव राज्यमक्षयम् ।**
**तेन मादृश-विगीत-वृत्तिना जन्तुना किमिह तापकारिणा ॥**

संकेतः—सौख्यस्य वारिणोपमया तुच्छत्वम्, विगीता निन्दिता वृत्तिश्चारित्र्यं यस्य तेन जन्तुनेति तुच्छताप्रत्यायकम् ॥ ८ ॥

किन्तु, हे देव यदि आपका अक्षय राज्य सुखशान्ति के जल से शीतल है

तो उसमें संताप पैदा करने वाली मुझ जैसी निन्दित व्यक्ति का प्रयोजन ही क्या ? ॥ ८ ॥

**अस्तु मे भवदभीप्सिता स्थितिर्हन्त कुत्रचिदपि क्षमातले ।**
**विश्वमस्तु तु विशल्यतां गतं काममद्य सह कीर्त्तिभिस्तव ॥**

मैं जहाँ आप चाहें, रह सकती हूँ । केवल विश्वमानव को निष्कण्टक रहना चाहिए, आपकी कीर्ति के साथ ॥ ९ ॥

**आर्य ! यावदवधि प्रजाहिते दीक्षितोऽसि सुखमात्मनस्त्यजेः ।**
**स्नेहदाहसहितो हि दीपको विश्वमुज्ज्वलयितुं प्रगल्भते ॥**

संकेतः—स्नेहो रागः, तैलादि च । तत्र यो दाहस्तत्सहितः ॥ १० ॥

आर्य, जब तक आप प्रजाहित की दीक्षा लिये हुए हैं, आपको अपना सुख छोड़ना होगा । दीपक स्नेहदाह लेकर ही विश्व को प्रकाशित कर पाता है ॥ १० ॥

**कृच्छ्रपङ्कविधृतोपि निश्चलः शीर्यते न हि बुधः, स पद्मति ।**
**यद्यशःपरिमलेषु भावकाः षट्पदन्ति विवशीकृताः स्वतः ॥**

संकेतः—कृच्छ्रं विपद् ।

व्यक्ति विपद्रूपी कीचड़ में पकड़ कर भी विशीर्ण नहीं होता, वह कमल बन कर ऊपर उठता है, उसके यशःसौरभ पर सहृदय जन भ्रमर बनने को बाध्य हो जाते हैं ॥११॥

**न प्रजा, न निजबन्धुता, परं जीवितात् सह समेति जन्तुना ।**
**तत्र केवलमनाविलं मनस्तस्य साक्षिपदमश्नुतेतमाम् ॥**

संकेतः—बन्धुता बन्धुसमूहः "ग्रामजनबन्धुभ्यस्तल्" । जन्तुना सह जीवितात् परं न समेतीति योजना ॥ १२ ॥

जीवन के बाद, न प्रजा, न तो बन्धुबान्धव ही प्राणी के साथ जाते । उस समय एक मात्र विशुद्ध और निष्पाप चित्त ही साक्षी का स्थान ग्रहण करता है ॥१२॥

**तेन कोपि किमपि ब्रवीतु, ये पारमार्थिकविवेकमाञ्जनीम् ।**
**आगमाक्षिनिपुणाः शलाकिकामाश्रयन्ति विचरन्ति तेऽभयम् ॥**

**संकेतः**—तादृशविवेक एव आञ्जनी शलाकिका, ताम् ॥ १३ ॥

इसलिए कोई भी कुछ भी कहे, जो कोई सत्य रूपी विवेक की अंजनशलाका अपने शास्त्ररूपी नेत्रों में लगाए रहते हैं वे सर्वत्र निर्भीक होकर विचरण किया करते हैं ॥ १३ ॥

**आर्य ! यद्यपि मनस्विनीजनः स्त्रीति विश्ववचनीयतास्पदम् ।**
**लोकनायकविवेकदीपकस्तत्कृते न परिहीयते परम् ॥**

आर्य, मनस्विनी नारियों को केवल स्त्री होने के कारण संसार भर शंका की दृष्टि से देखता और उनकी बदनामी करता है, किन्तु लोकनायक के विवेक का दीपक उनके लिए नहीं बुतता ॥ १४ ॥

**यद्यपि प्रतिविधित्सुरप्यसौ मानवो न विधिलेखमुत्खनेत् ।**
**चित्तसाक्षिकतयाऽनुवर्त्तते शुद्धिमेष यदि नो न तुष्यति ॥**

यद्यपि प्रतीकार करने पर भी मनुष्य विधाता के लेख को उखाड़ नहीं पाता, किन्तु यदि वह अपने अन्तःकरण की साक्षी पर अपनी ओर से शुद्धि की दिशा में प्रवृत्त रहता है तो अवश्य ही तोष का अनुभव करता रहता है ॥ १५ ॥

**अद्य यावदियमावयोर्मनःस्निग्धभूमिविधृता प्रतानिनी ।**
**पुष्यति स्म युगमङ्गलं सुमं, साद्य यद्यपि विशस्यतेतमाम् ॥**
**किन्तु पूर्वसदृशं चराचरं विश्वमेतदनया प्रसाध्यताम् ।**
**सौमनस्यमभिवर्ष्य, माधवी मिष्टता च खलु तत्र धीयताम् ॥**
**आवयोर्हृदयदुग्धसिन्धुनोत्थापितोऽयमनुरागनीरदः ।**
**दुर्दिनेष्वपि चिराय जायतां विश्वतापहरणाय सक्षमः ॥**

**संकेतः**—सुमं कुसुमम् । विशस्यतेतमाम् जनैरिति शेषः । चराचरं चराचरात्मकम् । प्रसाध्यताम् अलंक्रियताम्॥ १६-१७ ॥

आज तक हमारे मन की स्निग्ध भूमि पर टिकी जो लता युगमंगल पुष्प देती रहती थी, आज वह, यद्यपि काटी जा रही है—॥ १६ ॥

किन्तु इसे पहले के ही समान चराचरात्मक विश्व को अलंकृत ही करते रहता है और आहित करते चलना है सौमनस्य की वृष्टि कर उसमें मधु की मिठास भी ॥ १७ ॥

संकेतः—दुर्दिनेषु वार्षिकेषु विषमेषु च दिनेषु ॥ १८ ॥

हमारे हृदयरूपी दुग्धसिन्धु द्वारा उत्थापित अनुराग का यह नीरद इन दुर्दिनों में भी विश्व के संताप को चिरकाल के लिए दूर करने में समर्थ रहेगा ॥

**सैव काचिदपि शाश्वती स्थितिः प्रेम्णि हेम्नि रुचिरा यथा द्युतिः ।**
**विप्रियाग्निषु न यत्र विक्रियालेशमात्रमपि नैव जन्यते ॥**

प्रेम की शाश्वतता ठीक वैसी ही हुआ करती है जैसी सुवर्ण में सुन्दर कान्ति, जिसमें विप्रिय की आग रंचभर भी विकार नहीं ला पाती ॥ १९ ॥

**अन्तरिक्षमवनिर्दिवानिशं विश्वकर्मणि भवन्ति साक्षिणः ।**
**किन्तु दैवहतकेन वाग्मिता तेष्वपि द्युकुसुमायिता कृता ॥**

संकेतः—द्युकुसुमायिता अभावात्मिका ॥ २० ॥

यह अन्तरिक्ष और यह पृथिवी अहर्निश विश्व के प्रत्येक कर्म के साक्षी रहा करते हैं। किन्तु विधाता ऐसा कुटिल है कि वाणी को उसने इनमें भी आकाशकुसुम बना दिया है ॥ २० ॥

**आर्य यद्यपि शुचित्वमात्मनः सेद्धुमर्हति न साक्षिणं विना ।**
**किन्तु वश्यमनसां महात्मनां वर्त्मने न परतः प्रमाणिता ॥**

आर्य, यद्यपि हमारी शुचिता बिना साक्षी के सिद्ध नहीं हो पाती, किन्तु वश्य मन के धनी महान् आत्माओं के पथ के लिए प्रामाण्य परतः नहीं होता ॥ २१ ॥

**मेति मेति निगदन्तमीश्वरं साब्रवीत् पुनरपूर्वभाषिणी ।**
**आर्यपुत्रचरणाब्जयो रजः किन्तु कुत्र सुलभं भविष्यति ॥**

'बस बस' कह रहे राजा (राम) से अपूर्व भाषण में निपुण उस सीता ने पुनः कहना आरम्भ किया—

किन्तु, आर्यपुत्र के चरणों की धूलि मेरे लिए कहाँ सुलभ होगी ॥ २२ ॥

**हन्त सर्वमपि तावदस्यतां नाथ ते प्रणयभिक्षुकीमिमाम् ।**
**क्षीरसिन्धुविशदस्य चेतसः पार्श्वदूतिपदतो न हास्यसि ॥**

नाथ, मेरा सब कुछ छूट जाए किन्तु आपकी इस प्रणयभिक्षुकी को क्षीरसिन्धु-तुल्य उज्ज्वल हृदय की आसन्न परिचारिका के पद से न हटाइएगा ॥ २३ ॥

**पश्चिमा प्रणतिरङ्घ्रितीर्थयोर्नाथ तेऽद्य मयका विधीयते ।**
**मातरश्चरणरेणुरद्य वः स्वाञ्चलेऽत्र मयका निधीयते ॥**

नाथ ! आपके चरणतीर्थ में मैं आज यह अन्तिम प्रणाम कर रही हूँ। माताओं मैं आज आपके चरण रज अपने इस आँचल में निधि के समान अन्तिम बार धारण करती हूँ ॥ २४ ॥

**प्राणतोपि यशसि स्पृहा गुरुः सूर्यवंशिषु हि या प्रशस्यते ।**
**तां विभाव्य कलुषा स्नुषाऽद्य वो याति दूरमनुमन्यतान्तमाम् ॥**

सूर्यवंशियों में जो प्राणों से भी अधिक यश की स्पृहा प्रशंसा पूर्वक प्रसिद्ध है। उसे देख आपकी यह कलंकित पुत्रवधू दूर जा रही है, अनुमति दें ॥ २५ ॥

**येन सौभगमपि स्वकं पुरा त्याजिताः स्वकुलगौरवं हि तत् ।**
**वीक्ष्य मातर इहापि दुःक्षणे वत्सलत्वमवमन्यतान्तमाम् ॥**

अपने कुल के जिस गौरव ने आप से अपना सुहाग भी छुड़वाया उसी को देख, हे माताओं, आज के इस दुष्ट क्षण में भी अपनी वत्सलता छोड़ें ॥ २६ ॥

**पुत्रिकेव भवतीभिरुक्षिता याऽञ्चलेन सततं पयोमुचा ।**
**राजधर्मपरिपालनव्रतं वीक्ष्य सापि परिहीयतान्तमाम् ॥**

आपने दूध बहाते आँचल से जिसे बच्ची के समान सदा सींचा उसे भी राजधर्म के परिपालन के व्रत को देख, आज छोड़िये, छोड़ दीजिए ॥ २७ ॥

**राजमातृपदवी गरीयसी मातरो द्रुतिमुपेत्य चेतसः ।**
**प्राणतोपि यदि पाल्यते व्रतं तर्हि सा मम कृते न दूष्यताम् ॥**

माताओं, राजमाता का पद बहुत ही गरिमापूर्ण पद है, आप उसे हृदय की द्रुति के कारण दूषित न होने दें, यदि व्रत का पालन प्राण पण से किया जाता हो ॥ २८ ॥

**विश्वचित्ररचनापटीयसी वेधसो मतिरतीव चित्रिता ।**
**तत्र हन्त परिवर्त्तनं प्रियं चक्रयोरपि तथाध्वनोरपि ॥**

**संकेतः**—चक्रं हि परिवर्त्तमानं सत् तदीयं पन्थानमपि क्षोदयत् परिवर्त्तयति यद्यपि तत् स्थिरमिवैव भासते। प्रकृते च केन कस्य साम्यमिति स्वमनसैवोन्नेयम् ॥ २९ ॥

हन्त विधाता की विश्वरचनापटु मति अतीव विचित्र है। उसमें परिवर्त्तन तो प्रिय है किन्तु चक्रों का भी और मार्गों का भी ॥ २९ ॥

**विश्वदैवतमुपास्य कार्मणं यस्तु वाञ्छति चराचरप्रियम् ।**
**तेन पादपनिभेन केवला पूज्यतेऽनुपहिता परार्थता ॥**

संकेतः—कार्मणं वशीकरणम् । अनुपहिता उपाधिरहिता निश्छला निष्कामा चेत्यर्थः ॥३० ॥

जो कोई विश्वरूपी देवता का वशीकरण-मन्त्र जपता और चराचर का हित करना चाहता है वृक्ष के समान वह पूजा किया करता है केवल निरुपाधि परार्थता की ॥३०॥

**यामि मातर इतः स्वतस्ततो यामि, यामि विपिनं न मे व्यथा ।**
**कीर्तिकायमवितुं सुमानुषा मृत्युतोपि न हि जातु बिभ्यति ॥**

इसलिए माताओं मैं यहाँ से जाती हूँ, स्वयं ही जाती हूँ, और मुझे इसकी कोई व्यथा नहीं । अपनी कीर्त्ति की रक्षा के लिए अच्छे दम्पती और सत्पुरुष मृत्यु से भी कभी नहीं डरते ॥३१॥

**आह साथ विषमेपि सेवया पूजितुं गुरुजनं दृढव्रतम् ।**
**लक्ष्मणम्, "गुरुरसि त्वमेव मे धर्मपालनविधाविह क्षणे ॥**

इसके पश्चात् सीता जी ने विषम परिस्थितियों में अपनी सेवाओं द्वारा गुरुजनों की पूजा करने में दृढव्रती लक्ष्मण से कहा 'इस क्षण धर्मरक्षा के कार्य में तुम ही हो मेरे गुरु' ॥३२॥

**अग्रणीरसि सदा सनातने कालचक्रपरिचङ्क्रमे नृणाम् ।**
**आत्मनः प्रियमपास्य यो गुरूँश्छायया सम इहानुगच्छसि ॥**

सनातन कालचक्र परिक्रमा में तुमही हो मनुष्यों के अग्रणी जो अपने सुख को छोड़ बड़ों के पीछे चलते आये हो छाया के समान ॥३३॥

**याम्यहं विपिनमेकला गुरुं त्वं पुरेव परिरक्ष सर्वतः ।**
**त्यक्तधारमपि वारि शैत्यतो विप्रकर्षमिह नैव लिप्सते ॥**

आज जंगल में जा रही हूँ और अकेली जा रही हूँ । तुम अपने अग्रज की रक्षा पूर्ववत् करते रहना सब प्रकार से सदा ही । जल धारा को छोड़ सकता है, शैत्य को नहीं ॥३४॥

**साथ नेत्रसलिलप्रकाशितं कातरत्वमवरुध्य चेतसः ।**
**प्राञ्जलिर्भरतमन्वयाचत प्राग् वने विधृतमात्मवल्कलम् ॥**

अब उस सीता ने चित्त की अबलाजनोचित कातरता रोकी, अँजली बाँधी, याचना की भरत से अपने वन में पहने हुए पुराने वल्कलों की ॥३५॥

**वज्रपातमिव वल्लरी सतीभाषितं तदुपकर्णमागतम् ।**
**सोढुमक्षमतया सभाभवद् भूविलुण्ठितनुर्विचेतना ॥**

**संकेतः**—भूविलुण्ठिततनुत्वेन मूर्च्छितत्वमनुभाव्यते ॥३६॥

उसी सती का यह वाक्य जब कान तक आया तो उस पूरी सभा को लगा कि उन पर वज्र प्रहार हुआ है। वह उसे सह नहीं सकी और मूर्च्छित हो भूमि पर जा गिरी ॥३६॥

**मातरस्तदनु लब्धचेतना बाष्परुद्धवचसः कथञ्चन ।**
**प्रास्तुवन् निजवधूं प्रचेतसः सूनवेऽर्पयितुमाप्तसंविदे ॥**

**संकेतः**—निजवधूं सीताम्। प्रचेतसः सूनुः वाल्मीकिः आप्तसंवित्त्वेन तस्य सीता-विषये वास्तवदर्शितायाः शंसा ॥३७॥

माताओं को होश आया तो अपने बाष्परुद्ध कण्ठ से किसी प्रकार प्रस्ताव किया कि आप्त बुद्धि वाले प्राचेतस ऋषि ( वाल्मीकि जी ) को सौंप दिया जाय ॥३७॥

**राघवोपि जननीजनोदितं तद् वचः समभिनन्द्य लक्ष्मणम् ।**
**यन्त्रवत् तदभिधानुधाविनं "पूर्यतामिदमि"ति व्यजिज्ञपत् ॥**

राम ने भी माताओं का यह प्रस्ताव शिरोधार्य कर अपने आदेश का यन्त्र की नाई पालन करने वाले लक्ष्मण से कहा—इसका पालन किया जाए ॥३८॥

**"तात मातरमहं कथं न्विमा'-मित्यपूर्णवचनं हि लक्ष्मणम् ।**
**वज्रकष्टहृदयः स राघवो व्याक्षिपन्निदमवोचदच्युतः ॥**

"तात माता जानकी को मैं कैसे" इस प्रकार बोलते लक्ष्मण को बीच में रोक कर राम ने लक्ष्मण से कहा ॥३९॥

**वेत्सि नो, ननु विहाय जानकीं कुण्डली शिरसिगां यथा मणिम् ।**
**भेत्स्यते शिरसि तेऽयमग्रजो नूनमेव शतधा सहस्रधा ॥**

**संकेतः**—मणिर्द्वयोरित्यमरः ॥४०॥

जानते नहीं हो, जानकी को छोड़कर इस अग्रज का सिर मणि को छोड़कर सर्प के सिर के समान निश्चित ही शत शत और सहस्र सहस्र टुकड़े हो जायेगा ॥४०॥

**किन्तु हन्त मुकुलैरुपस्कृतां नूतनैः किसलयैश्च संवृताम् ।**
**मल्लिकां परशुना निकृन्तता चर्ममात्रहृदयेन किं मया ॥**

परन्तु हन्त, कलियों से अलंकृत और नवीन पत्तों से संवृत मल्लिका को जो कोई फरसे से काटता हो उस केवल चर्महृदय राम से क्या ॥४१॥

**यो हि नीलघन-कुट्टिमाम्बरोद्यानलास्य-पटु-मुग्ध-चञ्चलाम् ।**
**प्रीतिपूतमनसा मनस्विनीं न क्षमेत, वद सोऽपि मानुषः ॥**

**संकेतः**—नीलं च तद् घनं च, नीलश्चासौ घनश्च तद्वच्चेति नीलघनम्, अर्श-आदिभ्योऽच्, तच्च तत् कुट्टिमं गृहमध्याङ्गनं तदेवाम्बरोद्यानमाकाशोपवनं तत्र लास्ये पटुः मुग्धा चासौ चञ्चला विद्युत् तद्वत्स्फुरणसुभगा ताम् ॥४२॥

जो घरके नीले और घने अंगने के अम्बररूपी उद्यान में लास्यनिरत भोली चपला सी मनस्विनी ललना का प्रीतपूर्ण हृदय से न माने वह भी कोई मनुष्य है ॥४२॥

**तेन तां गगनपुष्पितां कथां रामसौख्यमवलम्ब्य तस्थुषीम् ।**
**मा स्म चिन्तय नियोगमात्मनः पूरय त्यज तव प्रजावतीम् ॥**

**संकेतः**—गगनपुष्पितेति सर्वथाभावाभिप्रायकं वचनम् । प्रजावती भ्रातृजाया ॥४३॥

इसलिये राम के सुख की उस आकाशपुष्पतुल्य कथा पर विचार मत करो और अपना कर्त्तव्य कार्य सम्पन्न करो । अपनी भौजाई को छोड़ आओ ॥४३॥

**पुत्रभावमवलम्ब्य तात यां काननेषु विचरन्नुपाचरः ।**
**सैव गर्भभरनिर्भरालसाप्यद्य शस्यत इदं च मृष्यताम् ॥**

**संकेतः**—शस्यते हिंस्यते । शसु हिंसायाम् ॥४४॥

तात, वनों तुमने पुत्रभाव से जिसकी सेवा की है, गर्भ के भार से अतीव अलसाई तुम्हारी वही भौजाई आज नष्ट की जा रही है । यह भी सह लो ॥४४॥

**यूयमेष भवदग्रजश्च ये क्षात्रकुक्षिषु विपाकमापिताः ।**
**तैः समग्रमतिभिः प्रजाहितं सूर्यवच्च शशिवच्च पाल्यताम् ॥**

**संकेतः**—एष भवतामग्रज इति वक्तू रामस्यात्मानं प्रति निर्देशः ॥४५॥

तुम सब और तुम्हारा यह अग्रज, ये जो क्षत्रिय माता की कुक्षि में पले हैं उन्हें अपनी पूरी बौद्धिक शक्ति से प्रजा का हित सूर्य और चन्द्र के समान रक्षित रखना है ॥४५॥

**यावदेव शृणुतेऽस्य शासनं लक्ष्मणो विमुखमानसः प्रभोः ।**
**आर्षशोणितभवा विदेहजा तावदेव निपुणं न्ययुङ्क्त तम् ॥**

लक्ष्मण राजा राम का शासन जब तक विमुख चित्त से सुनते हैं तभी तक ऋषियों के रक्त से समुद्भूत सीता उनसे पुनः बोली ॥४६॥

**मात्र कापि महती शरीरिणो वासना भवतु तत्कलेवरे ।**
**तत्र गूढगतिरस्त्यवस्थिता तोयदेषु चपलेव चेतना ॥**

**संकेतः**—कलेवरे स्थूले करणग्रामे ॥४७॥

देहधारी को चाहिए कि वह शरीर को अधिक महत्त्व न दे। शरीर में छिपी हुई है एक चेतना मेघों में विद्युत् की नाईं ॥४७॥

**तत्र कल्पलतिकेव सौमनस्याभ्रसिन्धुरुपबृंहते न वा ।**
**सा परिस्थिति-समौचिती-तटद्वन्द्वतो निरवधीयते न वा ॥**

**संकेतः**—तत्र चेतनायाम्। सौमनस्यं हि कामधुक्, अतः कल्पवल्लिसाम्यम्। तस्यैव पुण्यत्वबुद्धये अभ्रसिन्धूपमा। परिस्थितिः सीताजीवने लङ्कावासः, रामजीवने वनवासः, समौचिती पुनरत्र चारित्र्यरक्षणम् निरवधित्वमनन्तत्वं बिभुत्वं च ॥

उस ( चेतना ) में कल्पवल्ली सी सौमनस्य रूपी आकाशगंगा बढ़ रही है या नहीं, और वह ( सौमनस्यरूपी आकाशगंगा ) भी परिस्थिति तथा औचित्य के दोनों तटों से होकर निरवधि भाव ( अनन्ता ) को प्राप्त हो रही है या नहीं ॥४८॥

**तात जीवनरथस्य चक्रयोः प्रेयसोः परमिदं निरीक्ष्यताम् ।**
**दम्पतीतिपरतत्त्वमूर्जितश्रि स्पृहास्ति यदि वीक्षितुं जने ॥**

तात, प्रिय और प्रिया रूपी जीवनरथ के दोनों चक्रों के बीच केवल यही देखा जाता है, यदि व्यक्तिमें 'दम्पती'—रूप तेजस्वी पर तत्त्व के दर्शन की इच्छा हो ॥४९॥

**मानवी निज-चिति-त्रिमार्गगां गर्वशैलशिखरान्निपातयेत् ।**
**किं च तां समरसाद् वसुन्धरापृष्ठतोऽम्बुधिमनन्तमापयेत् ॥**

**संकेतः**—समरसाद् इत्यनेन सामरस्यमेव वसुन्धरापृष्ठमिति सूचितम्। तत्र वसूनि धरतीति योगार्थमादायार्थान्तरमपि शक्याक्षेपम् ॥५०॥

मानवी को चाहिए कि वह अपनी चितिरूपी त्रिमार्गगा ( गंगा ) को गर्वरूपी पर्वत के शिखर से उतारे और सामरस्य के समरस वसुन्धरापृष्ठ से अनन्तता के अनन्त ( समुद्र ) तक पहुँचाए ॥५०॥

**स्नेहसिन्धुमथ पूरुषाश्रयं प्रोत्तरङ्गमसमं प्रकर्षयेत् ।**
**आर्य–भूतल–रजोरुहं ततः प्राप्तजीवितफलं स्वमुद्दिशेत् ॥**

**संकेतः**—सिन्धुः समुद्रः स्वमात्मानं प्राप्तजीवितफलमुद्दिशेदित्यन्वयः स्वम्पदार्थ-विशेषणमेवेह आर्यभूतलेत्यादि ॥५१॥

और पुरुषविषयक स्नेह के अद्वितीय तथा उत्तरंग सिन्धु को पहुँचाए प्रकर्ष के उच्चतम शिखर तक, तब जाकर आर्यभूमि की मिट्टी से बने अपने आप को वह सफल समझे ॥५१॥

**एवमार्य–महिला–समीरिता भारती विरत–भावमाश्रिते ।**
**लक्ष्मणेऽभिनवचेतनाङ्कुरं प्रोद्बिभेद मुकुलं यथा द्रुमे ॥**

**संकेतः**—आर्यमहिलेति साभिप्रायं विशेषणम्। तेन भारतीयत्वमाक्षिप्यते।

आर्य महिला द्वारा कथित इस भारती ने भारतीयता से विरत हो रहे लक्ष्मण में चेतना का एक नवीन अंकुर पैदा कर दिया वृक्ष में मुकुल की नाई ॥५२॥

**एकतोऽग्रजनियोग एकतः स्वाभिमान ऋषिशोणितात्मनः ।**
**तद्द्वयेऽस्य परमानुरागिता मेघ–वात–पथ–दीपिकाऽभवत् ॥**

**संकेतः**—अग्रजनियोगो रामाज्ञा। ऋषिशोणितात्मा सीता। अस्य लक्ष्मणस्य मेघवातपदेन वायौ सीकरसान्द्रता प्रवेगत्वं चोन्मीलिते। दीपिकापदेन दीपस्यापि लघुत्वमुद्भावितम् ॥५३॥

एक ओर अग्रज का आदेश और एक ओर ऋषियों के रक्त से बनी सीता का स्वाभिमान। इन दोनों के बीच उस लक्ष्मण के परम अनुराग को पथ की दीपिका बना दिया गया जिसके एक ओर मेघ हो ओर दूसरी ओर मेघ की ही तेज हवा ॥५३॥

**अञ्जलिं भरतमूर्ध्नि निश्चलं साभिवन्द्य रिपुघातियोजितम् ।**
**स्यन्दनं तत उपारुरोह खं वैधवीव शुभदर्शना कला ॥**

**संकेतः**—रिपुघाती शत्रुघ्नः ॥५४॥

इसके पश्चात् भरत की सिर पर लगी अंजलि का अभिवादन कर सीता शत्रुघ्नद्वारा जोते रथ पर आरूढ हो गई उसी प्रकार जिस प्रकार चन्द्रमा की शुभकला आकाश पर आरूढ हुआ करती है ॥५४॥

**शुभ्रकेतुरवदात--वाहनः श्वेतरश्मिरतिशुद्धसंस्तरः ।**
**द्योतते स्म रथ एष तां वहन् तद्विशुद्धिपरिवेष्टितो यथा ॥**

संकेतः—रथ एष सर्वशुक्लः । एष एव हि भारतीयतायाः प्रतीकः ॥५५॥

उसी साध्वी को वहन कर रहा श्वेत पताका, उज्ज्वल घोड़े और शुभ्र आस्तरणों से युक्त वह रथ उस ( सती सीता ) की ही शुद्धि से परिवेष्टित सा लग रहा था ॥५५॥

**मातृभिर्विहितमङ्गलक्रिये भ्रातृभिः स्वयमुदस्तसञ्चरे ।**
**यत्र वर्त्मनि रथः स संस्थितो धौतमेतदमराश्रुवृष्टिभिः ॥**

वह रथ स्वयं माताओं द्वारा की गई मंगलक्रिया से मण्डित और स्वयं भाइयों ( भरत आदि ) द्वारा जनसंचाररहित किए गये जिस पथ पर खडा था उसे देवताओं के आसुओं की वृष्टि धो रही थी ॥५६॥

**तं निरस्तममतोऽथ लक्ष्मणो बाष्पपूरितदृगञ्चलो रथम् ।**
**आर्यधर्ममिव मौनिना हृदा यन्त्रवत् किमपि रोढुमायसत् ॥**

अपनी आँखों में आँसू लिए लक्ष्मण ने मौन हृदय से उस रथ पर आर्यधर्म के समान आरूढ होने का प्रयत्न किया ॥५७॥

**राघवोऽपि शितिकण्ठवत् ततः क्ष्वेडपानमिव मीलितार्धदृक् ।**
**जानकीगतमुपांशु वैशसं तन्नितान्तपरुषं न्यपीपिबत् ॥**

राम ने भी सीताके साथ हुए उस नितान्त परुष वैशस को अर्धनिमीलित नेत्रों से चुपचाप पी लिया जैसे शिवजी ने पिया था विष ॥५८॥

**रामवासभवनस्थ देहलीमुद्गताश्रु मुहुरीक्षमाणया ।**
**सीतया प्रियमवीक्ष्य सा पुरी सूचिकेव नयने व्यभाव्यत ॥**

संकेतः—रामो देहलीं यावदपि सीतागमनावसरे नायात इति गुह्यम् ॥५९॥

राम के निवास भवन की देहली को आँखो में आँसू लेकर बारम्बार देखती सीता को प्रिय ( राम के ) दर्शन के अभाव में वह नगरी आँखों में चुभती सुई सी लग रही थी ॥५९॥

**लक्ष्मणेरितरथाऽथ साऽचलच्चेतनेव रघुवंशिनां पुरः ।**
**तां विसृज्य बत पूश्च सा सतीं न व्यशिष्यत सुरद्रुहां पुरः ॥**

रघुवंशियों की चेतना सी वह सीता लक्ष्मण द्वारा चालित रथ के द्वारा उस नगरी से चल दी । सीता को छोड़ कर वह नगरी भी दानवों की नगरी से अधिक कुछ नहीं रह गई ॥ ६० ॥

**स्वस्य जीवनमखस्य जीवितं तां विसृज्य सुरभिं रघूद्वहः ।**
**दृश्यते स्म बत निष्परिष्क्रियो यूपदण्ड इव वेदिकाच्युतः ॥**

संकेतः—सुरभिः गौः, मनोज्ञा च, वेदिकातश्च्युतो वेदिकाच्युतः ॥ ६१ ॥

अपने जीवनयज्ञ की प्राण उस सुरभि ( अतीव रम्य ललना और कामधेनु गौ ) को छोड़ कर श्रीराम भी वेदिका से नीचे गिरे और परिष्कारशून्य यूपदण्ड से लग रहे थे ॥ ६१ ॥

**वस्तुतो यदि सुमानुषी सृतिः पद्मिनी, श्रयति पद्मतां प्रिया ।**
**साऽस्ति चेद् यदि शिखा विभावसोरूष्मतां स्पृशति तत्र च प्रिया ॥**

संकेतः—यदि सुमानुषी दाम्पत्यमयी सृतिः सृष्टिः पद्मिनी तर्हि प्रिया पद्मतां तत्प्राणतां श्रयतीत्यन्वयः ॥ ६२ ॥

सत्य यह है कि यदि दाम्पत्य कमलिनी है तो उसमें कमल होती है प्रिया और यदि वह अग्नि की शिखा है तो उसमें ऊष्मा का स्थान प्रिया ही लेती है ॥ ६२॥

**सैव जीवनसुधांशुचन्द्रिका सैव संस्कृतिवसन्तकोकिला ।**
**तां विना न चरितार्थता सृतेः कल्पवल्लिमिव नन्दनावनेः ॥**

वह ( प्रिया ) ही होती है जीवनरूपी चन्द्र की चन्द्रिका और वही होती है संस्कृतिरूपी वसन्त की कोकिला । उसके विना जन्म को चरितार्थता वैसे ही संभव नहीं जैसे कल्पलता के विना नन्दनवन को ॥ ६३ ॥

**पुरुषोऽग्निपरमाणुरच्चितिः सत्प्रियैव ननु तत्र, तां विना ।**
**नाम–रूप–कलना–प्रसूरियं संहितापि ननु कच्छपीपयः ॥**

संकेतः—वेद विज्ञानानुसारेणाग्निपरमाणावपां चितिश्चयनमेव नाममूलां भिन्नतां तदाश्रयभूतां रूपतां च याति । सैवेयं परा कला, तस्याः प्रसूर्माता संहिता संघातभावः । सा कच्छपीपयोऽभावात्मिका ॥ ६४ ॥

पुरुष तो परमाणुमात्र है अग्नि का । उसे महाभूतरूप में परिणत करने वाली

अप्तत्त्व की चिति प्रिया ही हुआ करती है। उसके विना नाम और रूप की लीला को जन्म देने वाली यह संहिता ( पिण्डात्मक ब्रह्माण्ड ) भी कुलमिलाकर ( त्रिकाल-बाधित ) कच्छपीपय ही है ॥ ६४ ॥

**ज्योतिरिङ्गण–मयूखतो हि या भास्करावधि विभाव्यते प्रभा ।**
**संविदक्षिणि ततोऽप्यसौ परा मातृशक्तिरनुबिम्ब्यते परम् ॥**

**संकेतः**—ज्योतिरिङ्गणः खद्योतः । ततः तस्याः प्रभायाः सकाशात् ॥६५॥

खद्योत की किरण से लेकर भगवान् भास्कर तक जो प्रभा दिखाई देती है उसके भीतर से भी संवित्तत्त्वरूपी नेत्र में केवल परा मातृशक्ति ही प्रतिबिम्बित हुआ करती है ॥ ६५ ॥

**तां हि दुग्धदशनो यथा जनः कश्चिदप्यतितरामधिष्ठितः ।**
**याति हन्त यजमानतां परां याति हन्त जनुषः कृतार्थताम् ॥**

**संकेतः**—यजमानता "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्" इति गीताचार्यवचनात् प्रजातन्तुवितानरूपयज्ञ-कर्तृत्वम् । तदेव च जनुषो जन्मनः कृतार्थताया मूलम् ॥ ६६ ॥

जो कोई व्यक्ति दुधमुंहे बालक की नाँई उस शक्ति पर सर्वतोभावेन अतीव गंभीरता के साथ अधिष्ठित रहता है वह निश्चित ही परा यजमानता को प्राप्त होता है और प्राप्त होता है जन्म की उत्कृष्ट कृतार्थता को ॥ ६६ ॥

**हृदयं हृदयेन संवदेदयमात्मा च वपुःपरिच्छिदाम् ।**
**अपनीय परात्परं विशेदिति हेतोर्गृहमेधिता सताम् ॥**

सत्पुरुष गृहमेधी इसीलिए बनते हैं कि हृदय हृदय का संवादी हो और यह आत्मा शरीर के घेरे से ऊपर उठ परात्पर तत्त्व में प्रवेश कर सके ॥ ६७ ॥

**इति भावितमानसो नृपः प्रविवेशाश्रममेष यं पुरः ।**
**शलभादिव दीपकस्ततो निरवेदीन्न हि तद्वियोगतः ॥**

**संकेतः**—यमाश्रमं गार्हस्थ्यम् । निरवेदीत् निर्विण्णो जातः ॥ ६८ ॥

उस भाव से भावितचित्त श्री राम ने जिस आश्रम में पहले से प्रवेश कर रखा था उससे वे, शलभपात से दीपक की नाँई, निर्विण्ण ( विरक्त और बुझे ) नहीं हुए सीता को छोड़कर भी ॥ ६८ ॥

निज--नरपति--धर्म--रक्षणायां
हिमगिरि--निश्चलतां वहन् निराशीः ।
धृतवपुरिव कर्मयोग एष
क्षपित--ममत्वतया तदान्वभावि ॥६९॥

अपने राजधर्म के पालन में हिमाचल सी निश्चलता लिए निष्काम राम ममत्व का बन्धन तोड़कर मूर्त्तिमान् कर्मयोग से प्रतीत हो रहे थे ॥ ६९ ॥

इति सनातनोपाह्व—श्रीमद्—रेवाप्रसादद्विवेदिकृतौ "सीताचरित"-
नाम्नि सर्गबन्धे जानकीपरित्यागो नाम
तृतीयः सर्गः ॥ ३ ॥

# चतुर्थ: सर्गः

**तनयां जनकस्य लक्ष्मणो भुवमिक्ष्वाकुकुलस्य सन्ततेः ।**
**विदधीत वनेचरीं कथं कथमार्यस्य वचश्च लङ्घयेत् ॥**

**संकेतः**—इक्ष्वाकुकुलसन्ततिभूत्वेन गर्भिणीत्वमाक्षिप्यते । आर्यस्य श्रीरामस्य ॥ १ ॥

लक्ष्मण इक्ष्वाकुकुल की सत्ता की मूल कारण जनकनन्दिनी सीता को वनेचरी कैसे बनाए और अपने बड़े भाई की आज्ञा का उल्लङ्घन भी कैसे करे ॥ १ ॥

**इति पीडितहृत् स लक्ष्मणश्चिरमश्रूणि विमुच्य जानकीम् ।**
**भगिनीभिरथोर्मिलादिभिः परिसंभावयितुं गृहं ययौ ॥**

**संकेतः**—परिसंभावयितुं परिपूजयितुम् ॥ २ ॥

विचिकित्सित चित्त लक्ष्मण बहुत देर तक आँसू बहाकर ( सीता की ) बहिन उर्मिला आदि को उनकी पूजा का अवसर देने हेतु सीता को घर ले गए ॥ २ ॥

**अथ तां भ्रमरीमिवाब्जतः परिहीणामनवेत्य हृष्यता ।**
**स्वहृदा कमलामिवोर्मिला सपदि प्रत्युदियाय सोदराम् ॥**

**संकेतः**—हृदः कमलौपम्यं गम्यम् ॥ ३ ॥

उर्मिला ने घर पहुँचते ही सीता जी की अगवानी घर आई लक्ष्मी के समान प्रसन्न चित्त से की यह न जानकर कि वे कमल से अलग की गई भ्रमरी की स्थिति में थीं ॥ ३ ॥

**शिरसाऽलकशोभिना पदे प्रणनामोर्मिलमानसोर्मिला ।**
**जनकात्मभुवो विधित्सती कमले केचन शैवलाश्रिते ॥**

**संकेतः**—पदे कमलोपमे, सालकं शिरश्च शैवलोपमम् ॥ ४ ॥

तरंगितचित्ता उर्मिला ने अलकशोभित शिर से सीता के चरणों को प्रणाम किया, मानों किन्हीं दो कमलों को शैवल से सुशोभित करने हेतु ॥ ४ ॥

**द्वितयं द्वितयेन संगतं लभते स्मानुपमां द्युतिं तयोः ।**
**अरुणद्युति चूर्णकुन्तलं नखराग्रं च पलाशपेशलम् ॥**

दोनों वस्तुएं दोनों वस्तुओं से मिलकर अनुपम कान्ति को प्राप्त हो रही

थीं, एक तो ( उर्मिला के ) ताम्रवर्ण के केशपाश और दूसरा ( सीता के ) चरणों का पलाशपेशल नखाग्र भाग ॥ ५ ॥

**श्लथबाहुलताऽऽनिनाय तां भगिनीमन्यमनस्कतां गता ।**
**उरसि ज्वलिते विदेहजा नलिनीं यद्वदतीव शीतलाम् ॥**

**संकेतः**—अन्यापि या तापमपाचिकीर्षति सा नलिनीं हृदये दधाति ॥ ६ ॥

श्थलबाहुलता और अन्यमनस्क सीता ने अपनी उस भावुक बहिन को तप्त हृदय से नलिनी की भाँति लगा लिया वह अतीव शीतल जो थी ॥ ६ ॥

**वरटामिव वारिदावली तरला साश्रुजला च सा सती ।**
**भगिनीं न हि सस्वजे दृढं, क्व विषादे हृदयं प्रवर्त्तते ॥**

**संकेतः**—वरटा हंसी । वारिदावलीपक्षे अश्रुतुल्येन जलेन सहित साश्रुजला वारिदावल्यपि हंसजातिं मानसं यावत् सहायितया परिगृह्णन्त्यपि विद्युतमिवाश्लेष-बहुमानेन न मानयति ॥ ७ ॥

तरला और साश्रुजला वह सती हंसी का मेघमाला के समान अपनी बहिन का दृढ आलिंगन नहीं कर सकी । विषाद के समय चित्त लगता ही कहाँ ॥ ७ ॥

**कुसुमास्तरणे कृतस्थितिर्भ्रमरी चेत् करकाभिरर्द्यताम् ।**
**बिभृयादियमत्र दुःक्षणे मृदु साम्यं यदि जानकीचितेः ॥**

**संकेतः**—अत्रास्मिन् । मृदु साम्यं न तु पटु साम्यम् । यदीत्यनेन तत्रापि न नितान्तं निर्भरता । तस्यां गर्भकदर्थनाया अभावात् ॥ ८ ॥

पुष्प के बिछौने पर पली भौरी यदि उपलवृष्टि द्वारा पीटी जाए तो कदाचित् वह इस दुष्ट क्षण में सीता की चेतना का थोड़ा सा साम्य धारण कर सकती है ॥ ८ ॥

**विदुषी तदनूर्मिलापि सा श्वसुराधिं मनसोऽभिलक्ष्य तम् ।**
**भगिनीं विहितार्चनक्रिया मसृणं मञ्जु च तां व्यजिज्ञपत् ॥**

कुछ क्षणों के पश्चात् विदुषी उर्मिला भी दीदी की उस मनोव्यथा को भाँप गई, और उसने स्वागत सम्मान कर उस ( दीदी ) से मसृण और मञ्जु ढंग से निवेदन किया ॥ ९ ॥

**अयि दुर्ललिते ! पितुः, प्रभोर्घनसाराञ्जनवर्त्तिके दृशोः ।**
**किमिति श्रयसे स्वसः श्रियं विधुमूर्त्तिर्नु विभातचन्द्रिकाम् ।।**

संकेतः—विभातचन्द्रिका हि परिम्लानायाः श्रिय उपमानम् ।। १० ।।

अयि पिताजी की दुलारी और महाराजा साहब की आँखों की कर्पूर-शलाका बहिन, तेरी श्री ऐसी क्यों दिखाई दे रही है—चन्द्रकलामें प्रभातकालीन चाँदनी जैसी ।। १० ।।

**तव मामपि वीक्ष्य वत्सले ! प्रणयाच्छोदसरोनिमज्जनात् ।**
**कथमद्य न पुण्डरीकतां नयनद्वन्द्वमिदं समश्नुते ।।**

संकेतः—प्रहर्षाभावस्य पर्यायेणाभिव्यञ्जनात् पर्यायोक्तमत्र ।। ११ ।।

अयि वत्सले, तेरी ये आँखें प्रणयरूपी उज्जवल सरोवर में डूबकर निकले पुण्डरीक क्यों नहीं बन रही हैं, मुझे भी देखकर ।। ११ ।।

**छविशालिनि किं न शीलति प्रणयाब्धिस्तव वीक्ष्य मामपि ।**
**तरलत्वमथोत्तरङ्गतासचिवं ह्लादमितः पुरा यथा ।।**

संकेतः—विलोकने दर्शने । इतः अस्मात् पूर्वं यथा ।। १२ ।।

अयि छविशालिनी, मुझे देखकर तेरा यह प्रणयसमुद्र तरलित और तरंगित क्यों नहीं हो रहा है पहले के समान ? ।। १२ ।।

**नयनं भ्रमरद्वयं यथा सितपद्माद्वयगात्रयष्टिके ! ।**
**तव मामपि वीक्ष्य निर्भरं वद मातर्वद किं न मोदते ।।**

संकेतः—सितपद्मस्याद्वयो गात्रयष्ट्यां यस्यास्तत्संबुद्धौ । ज्येष्ठाया भगिन्या मातृपदेनामन्त्रणमौचित्याविरोधि ।। १३ ।।

अयि सफेद कमल से अभेद रखती गात्रयष्टि वाली, भौरोंके समान तेरे दोनों नेत्र मुझे देखकर भी अतीव प्रसन्न क्यों नहीं हो रहे ।। १३ ।।

**कथमद्य नभोमरालतां दधदप्यम्बुधिदुग्धफेनताम् ।**
**अविमुञ्चदपि क्षपाकृतो वपुरासादितसोदरं न हि ।।**

संकेतः—आसादिता सोदरा पद्मा येन तत् । अत्र सीताया मुखपद्मस्य क्षणाकृद्वपुष्ट्याध्यवसायः ।। १४ ।।

चन्द्रमा का मण्डल आज आकाशसर का हंस और अम्बुधि के दूध का फेन होकर भी अपनी बहिन ( चन्द्रपक्ष में श्री ) को नहीं अपना रहा है ॥१४॥

**दशनद्वयमेतदद्य ते कुमुदाभं स्मितवत्सलान्मुखात् ।**
**न निगच्छति, कुन्दकुड्मलं विसपत्नं च कथं विधित्सति ॥**

तेरे स्मितवत्सल मुख से कुमुद जैसे ये दोनों दाँत बाहर क्यों नहीं निकल रहे हैं और कुन्दकली को निस्सपत्न क्यों बनाना चाह रहे हैं ॥१५॥

**भवतात् तव शोणिमोत्तरे दशनस्योत्तरवाससि स्वसः ।**
**स्मितिशारद-चन्द्रशीतलैर्विशदैरंशुभिरुच्छ्रिता छटा ॥**

संकेतः—शोणिम्ना उत्तरे महिते । दशनस्योत्तरवाससि उत्तरोष्ठे ॥१६॥

दीदी, तेरे ललोई भरे उत्तरोष्ठ पर स्मिति की शरत्कालीन चन्द्रकिरणों सी शीतल और उज्ज्वल रश्मियोंसे प्रवृद्ध कोई अपूर्व छटा आज भी दिखाई दे ॥१६॥

**शुक एष यथात्र दाडिमं मणिमात्रे विधृतं जिघृक्षतु ।**
**पृथुकः कलहंससंभवोऽप्ययि कह्लारदलाम्बुविद्रुमम् ॥**

संकेतः—एष पार्श्ववर्ती शुकः, अथ च शुक एष इति नासिकाया अध्यवसायः, मणिपात्रेणाधरस्य, दाडिमेन च दन्तद्युते । एवमेव कलहंससंभवपृथुकपदार्थेनापि नासिकाया एवाध्यवसायः कह्लारदलेनाधरस्य, अम्बुविद्रुमेण च दन्तस्मितस्य । तदेवमत्रातिशयोक्तिमाला ॥ १७ ॥

( दीदी मेरी इच्छा है ) यह सुग्गा मणि की कटोरी में रखे अनार के दाने उठाने लग जाए और कलहंस का छौना भी लाल कमल की पँखुड़ी पर पड़े मूँगे चुगने लगे ॥१७॥

**अपि चामृतसन्निभेन ते वचसा मामशिवेतरं दिशेः ।**
**भगिनि क्रशिमानमागतैर्मसृणस्निग्धकपोलकुञ्चितैः ॥**

संकेतः—अशिवेतरं शिवेतरविपरीतम् ॥१८॥

और दीदी, अपने दुबले कपोलों की मसृण और स्निग्ध सिकुड़न के साथ निकली अमृततुल्य बोली से मुझे अपना कुशल मंगल सुनाओ ॥१८॥

**अयि दुर्ललितां किमद्य मां पुनरप्यंशुमता स्वचक्षुषा ।**
**विकचद्युतिनाम्बुजन्मना नलिनी हंसवधूमिवेक्षसे ॥**

दादी, मुझे अपनी दुलारी को आज फिर से चमकती आँखों से निहारेगी, खिले कमल से हंसी को नलिनी की भाँति ॥१९॥

**न नभो, जननी न वा मही, न दिशश्चापि भवन्ति मत्प्रियाः ।**
**सकलेन मुखेन्दुना तव स्फटिकांशौ प्रविरज्य तिष्ठता ।।**

संकेत—जननी माता सीताप्रसूत्वात् ॥२०॥

मुझे न आकाश ही तृणमात्र के लिए भी अच्छा लग रहा है, न माता भूमि और न दिशाएँ ही जब तक तेरा, मुखरूपी पूर्णचन्द्र स्फटिक जैसी किरणों को न बिखेरे ॥२०॥

**तदलं बहुना, निबोध मां हृतधैर्यां, भगिनि ! ब्रवीतु सत् ।**
**प्रणतिप्रवणेषु साधवो न भवन्त्यान्तरबाह्यमुद्रणाः ।।**

बस, बहुत हुआ, दीदी मेरा धैर्य टूट चुका है सच सच कह। प्रणाम करने वालों के प्रति साधुजन भीतर या बाहर की कोई गाँठ नहीं रखते ॥२१॥

**इति सोर्मिलया विनिद्रया कमलिन्या भ्रमरीव जानकी ।**
**मुखरत्वमवापिता बलात् प्रणयामोदपरागपुञ्जया ।।**

संकेतः—विनिद्रता जागरूकता, पक्षे च विकासः। प्रणयामोदः प्रणयरूप आमोदः प्रणयः आमोद इवेत्युभयथान्वयः ॥२२॥

इस प्रकार उर्मिला ने सीताजी को मुखर बना दिया, जैसे विनिद्र कमलिनी भ्रमरीको मुखर बना दिया करती है। उसमें प्रणय का सुरभित पराग जो था ॥२३॥

**अयि साग्रहमानसे ! तव स्पृशतु स्वच्छकपोलमद्य मे ।**
**किमिव प्रणयाम्बुगर्भितं कदलीपत्रमिवानलः करः ।।**

संकेतः—कदलीपदेनात्र सुवर्णकदली ग्राह्या ॥२३॥

अयि हठीली, तेरे प्रणयाम्बुगर्भित स्वच्छ कपोल को मेरा हाथ आज कैसे छुए (प्रणयतुल्य अम्बु से गर्भित) कदली पत्र को अग्नि के समान ॥२३॥

**तव साञ्जनमेतयोर्युगं सरलेऽक्ष्णोरसिताब्जमित्रयोः ।**
**किमिवाम्बुपरीतमिन्दिरे रघुवंशस्य विधातुमुत्सहे ।।**

संकेतः—रघुवंशस्य इन्दिरा लक्ष्मीः, तत्संबुद्धौ ॥ २४ ॥

अयि रघुवंश की लक्ष्मी नील कमल के मित्र तेरे साज्जन नेत्रों को आँसुओं से भरने का उत्साह मैं कैसे अपनाऊँ ॥ २४ ॥

**सुभगे ! प्रतिपत्तिनिष्ठुरो विधिरेव व्यवसाययत्यमूः ।**
**क्षणमात्रसखीरनर्गला विपथे पान्थमतीः कुतर्किणीः ।।**

संकेतः—प्रतिपत्तिनिष्ठुरो निष्ठुरप्रतिपत्तिक इत्यर्थः। क्षणमात्रसखीः क्षणिकत्ववल्लभाः, अस्थिरा असमाहिता इत्यर्थः। पान्थः लोकयात्रापथिकः॥ २५॥

सुभगे, पथिकजनों की कुतर्कशील क्षणिक और अनर्गल मति को निष्ठुरनिश्चयी विधाता ही वाम पथ में लगाता है॥ २५॥

**स्मितमञ्जु परन्तु ते चितिः प्रियचेतोविटपैकवल्लरि।**
**मधु-मिष्ट-निधीनुपाश्रयेदिति मे प्रार्थयते मनः सदा॥**

संकेतः—स्मितमंजु यथा स्यात् तथा। प्रियो लक्ष्मणरूपः, तस्य चेतो विटपरूपः, तत्रोर्मिला वल्लरीरूपा। वल्लरी च यदि मधुनो मकरन्दस्य मिष्टतां न बिभृयात् तर्हि दुर्भगैव सा भवेत्, उर्मिलायाश्चितिश्च। मधु दाम्पत्यसौभाग्यप्रसूत आनन्दः॥ २६॥

किन्तु अयि प्रियहृदयरूपी शाखा पर आश्रित लते, तेरे लिए चाहती हूँ कि तेरी चेतना सदा मधु से मीठी निधियाँ बटोरे॥ २६॥

**नवशाद्वलकोमलक्षितौ तव रोमन्थमुखी तवा मृगी।**
**रुचये भवतादुदञ्चितुं प्रियगात्रं निजशृङ्गघर्षिणी॥**

संकेतः—संप्रयोगसौख्यं तव रुचये भवेदिति पर्यायेणात्र पिशुनितम्॥ २७॥

नई दूब से सुकुमार भूमि पर जुगाली करती और सींग से कुरेदकर अपने प्रिय के शरीर को रोमांचित करती मृगी तुझे सदा अच्छी लगती रहे॥ २७॥

**कुलिशप्रतिमौ भुजौ भुजो भुजजाते! तव भर्त्तुरग्निवत्।**
**विदधान इव स्पृशेत् सदा निजदेशाय च सौभगाय च॥**

संकेतः—तव भुजः स्वभर्तुः भुजौ, हे भुजजाते क्षत्रिये, अग्निवत् अग्नितुल्यौ विदधानः सन् स्पृशेदित्यन्वयः। तस्य च फलं स्वदेशरक्षा, स्वसौभाग्यलाभश्च॥ २८॥

अयि क्षत्रिये, तेरी बाँह तेरे पति के वज्रतुल्य भुजदण्डों को आग बनाती हुई सदा छूती रहे, अपने देश और सुहाग के लिए॥ २८॥

**तनुतां तनुवल्लरी तवाव्यय-भर्तृद्रुम-बाहुमाश्रिता।**
**किमपि प्रतिमापरं फलं जगती-मङ्गल-मूल-मात्मजम्॥**

**संकेतः**—आत्मजमेव फलमिति संबन्धः लताया अपि फलमात्मजमेव ॥ २९ ॥

तेरी अंगलता तेरे अच्युत पतिरूपी विशाल वृक्ष की भुजा का आश्रय ले और आत्मज रूपी ऐसा कोई फल दे जो अप्रतिम हो, जो विश्वमंगल का मूल हो ॥ २९ ॥

**अहमस्मि न साम्प्रतं स्वसो रविवंशस्य वधूः परात्परा ।**
**अधुनास्मि वराटचेटिका भुवनस्यास्य पुनर्वनेचरी ॥**

बहिन, मैं अब रघुवंश की परात्पर वधू नहीं रह गई हूँ। आज मैं इस संपूर्ण विश्व की वराटचेटिका ( एक कौड़ी रोजी पाने वाली दासी ) हूँ, फिर से वनेचरी ( वानप्रस्थ आश्रम की ) बन गई हूँ ॥ ३० ॥

**स्वसुरेवमुदीर्यमाणया नववाचाऽभवदूर्मिलोर्मिला ।**
**उपदेशगिरो वयस्ययोर्न हि ताटस्थ्यमृते भवन्ति यत् ॥**

संकेतः—नवत्वमिदंप्रथमतया श्रूयमाणत्वात् ऊर्मिला तरङ्गवती शङ्कातरला ॥ ३० ॥

बड़ी बहिन की इस प्रकार की बात सुन उर्मिला विचलित हो उठी। मित्रों के बीच उपदेश की वाणी विना मित्रता के अभाव के स्थान नहीं पाती ॥ ३१ ॥

**अथ तामवदद् विपद्भयात् तरलान्तःकरणा लघुः स्वसा ।**
**क्रियते मुखरा प्रभञ्जनैर्न पिकी नो यदि शस्यते लता ॥**

अब विपत्ति की आशंका से विचलितचित्त उर्मिला सीता से बोली। प्रभञ्जनों से कोकिला मुखरित होती ही है यदि लता का विनाश हो रहा हो ॥ ३२ ॥

**कथयस्व निबोधयस्व मामयि मे शैशवसङ्गिनि ! स्वसः ! ।**
**विपदा नु कया तिरस्कृतं तव चेतःकुसुमं विभाव्यते ॥**

मेरी शैशवसंगिनी बहिन, बोल, बतला, मुझे बतला, तेरे चित्त का फूल किस विपदा से झुलस रहा है ॥ ३३ ॥

**कतरत् तव पायसोपमे दधिविप्रुट् शिवजीविते स्वसः ।**
**कुत आपतदाः कुतः पुनर्विधिरास्ते विपरीततां गतः ॥**

तेरे दूध जैसे पवित्र और मंगलमय जीवन में कहाँ से कौन सी दही की बूंद आ पड़ी। विधाता फिर से वाम क्यों हो गया ॥ ३४ ॥

**अथ यावदियं प्रसादनप्रणतिं तत्पदपद्मयोर्व्यधात् ।**
**श्रुतकीर्तिरथात्र माण्डवी, द्रुतमाजग्मतुरङ्घ्रिपङ्कजैः ॥**

उर्मिला यह सब जानने के लिए जब तक सीता के चरणों पर अपना माथा रखती है तभी तक श्रुतकीर्त्ति और माण्डवी द्रुतगति से पैदल चलकर आ पहुँचती हैं ॥३५॥

**प्रिययोर्मुखपुण्डरीकतः श्रुतवृत्तं भगिनीद्वयं तु तत् ।**
**अकरोत् तदनूर्मिलामपि प्रतिपन्नामतिमूर्च्छितान्तराम् ॥**

**संकेतः**—प्रतिपन्नामगवतार्थाम् ॥३६॥

उन दोनों बहिनों ने अपने अपने प्रिय के मुख से सारी बातें सुन रखीं थीं। उन्होंने उर्मिला को भी अवगत और अतीव व्याकुल चित्त कर दिया ॥३६॥

**अथ सा निमिवंशजासमिद् वचसां शोधयति स्म पद्धतिम् ।**
**विवृतैर्ललिताननाधरैर्मधुरैर्योगमवाप्य तस्थुषीम् ॥**

अब निमिवंश की लड़कियों की वह पूरी समिति उनके खुले हुए मधुर और ललित चेहरों जैसे ही अधरों से सम्बन्धित वाग्धारा को पवित्र करने लगीं ॥३७॥

**समजेषु निरर्गलेष्वपि श्रयते निर्घृणता न तां प्रथाम् ।**
**श्रयते मनुजेषु यां, खगाः किमु नो नीडकृतः प्रजाकृते ॥**

निरर्गल पशु समाज में भी निर्दयता उस सीमा तक नहीं पहुँचती जिस तक मनुष्य समाज में। क्या पक्षी अपनी भावी सन्तति का ध्यान नहीं रखते और घोंसले नहीं बनाते ? ॥३८॥

**अबला प्रथमं ततो वधूः परिणीताथ निषेकपाकभृत् ।**
**अपि चेन्दुमरीचिनिर्मला विबुधैर्हन्त तथापि साऽस्यते ॥**

एक तो अबला, फिर रिश्ते में परिणीता, फिर पक्वगर्भा और चन्द्रकिरणों सी निष्कलंक। उसे भी छोड़ा जा रहा है, वह भी विद्वानों द्वारा ॥३९॥ अस्यते क्षिप्यते

**अपि मुद्रयितुं जनाननं स्वसती-त्यागविधिः किमौचिती ।**
**नियतं विधुमूर्त्तिमप्यसावनृताङ्कां न कदापि पूजयेत् ॥**

जनता की जबान चुप करने के लिए भी क्या अपनी सती पत्नी का त्याग कोई औचित्य है ? उसे तो झूठे कलंक से दूषित ठहराई चन्द्रमूर्त्ति को भी नहीं पूजना चाहिए ॥४०॥

**यदि लोकमतेन केवलं क्रियतां धर्मविनिर्णयो बुधैः ।**
**तदधर्म इति श्रवस्तपा श्रुतिरेवास्तु निघण्टनिःसृता ॥**

संकेतः—श्रवः श्रोत्रम्, तत् तापयतीति । निघण्टात् कोशात् ॥४१॥

विद्वानों को धर्मका निर्णय यदि लोकमत से ही करना है तो कानों को तपाने वाला 'अधर्म'—शब्द कोष से निकाल ही दिया जाना चाहिए ॥४१॥

**ऋतमेकमुपासितुं जने यतमानेऽनृतभाषिणः शतम् ।**
**उदिते रविमण्डलेऽन्यथा प्रलपन्तो न न कौशिकोपमाः ॥**

संकेतः—शतं शतसंख्याकाः । कौशिक उलूकः ॥४२॥

एक सत्य की उपासना में यत्नशील व्यक्ति के समक्ष सौ असत्यभाषी भी विपरीत कहें तो वे उदित सूर्य के सामने उलूकपक्षी ही ठहरते हैं ॥४२॥

**अयि मातरुदस्यतां त्वया जनकोपे प्रतिकोप ईदृशः ।**
**न हि कुक्कुरधिक्कृतौ गजो बुधवन्द्यो भजति प्रतिक्रियाम् ॥**

माता, जनकोप पर इस प्रकार का प्रतिकोप छोड़ । विद्वद्वन्द्य गजराज कुत्तों के भूंकने पर प्रतिक्रिया नहीं अपनाता ॥४३॥

**तव साहसमीदृशं स्वसो नियतं वन्द्यमथापि नः कृते ।**
**प्रसवावधि केवलं त्वया क्रम एष व्यपनीयतां यदि ॥**

दीदी, तेरा यह साहस निश्चित ही वन्दनीय है, तब भी हम बहिनों के लिए यह निश्चय यदि छोड़ देती कम से कम केवल प्रसव तक के लिए ॥ ४४ ॥

**क्व ममत्वमयी गुरुः स्वसा क्व वनान्ताः क्व दशा तवेदृशी ।**
**क्रकचात्नलिनीं सुपुष्पिणीं वद चेद् दारयितुं क्रमः क्षमः ॥**

कहाँ तो (मेरी) ममताभरी बड़ी दीदी, कहाँ वनान्त, और कहाँ यह तेरी दशा (गर्भ) । खिले पुष्प से सुशोभित कमलिनी को आरे से टुकड़े टुकड़े करना उचित हो तो कहो ॥४५॥ क्षम उचित

**कियती ननु रे विडम्बना नियतेर्मानवदेहधारिणाम् ।**
**शतचक्रतयाऽद्य यावदाः शिरसि प्रोद्भ्रमति प्रमाथिनी ॥**

आः, नियति की कितनी बड़ी और कितना अधिक मन्थन कर देने वाली विडम्बना घूम रही है मानवदेहधारी प्राणियों के सिर पर, सौ सौ चक्र सी ॥४६॥

**क्रियतां परमत्र किं जनैः कटुसामाजिकरीतिभीषितैः ।**
**हृदय-द्रविणेऽथ दुर्विधैर्यदि न प्रत्ययभूमिकाच्यर्ते ॥**

समाज की कटु रीतियों से विभीषित, साथ ही हृदय की विभूति से भी दरिद्र व्यक्ति आखिर करे ही क्या, यदि ( समाज के द्वारा ) विश्वास की भूमिका का आदर नहीं किया जाता ॥४७॥

**यदि विश्वसनस्य भूमिकामुपरिष्टाच्च मनुष्यभावनाम्– ।**
**अधिकृत्य न संप्रवर्त्यते न समाजः स, महद्धि तच्छलम् ॥**

यदि विश्वास भूमिका और उसके ऊपर मनुष्य भावना को अपनाकर नहीं चला जाता तो वह समाज समाज नहीं, वह एक महान् छल है ॥४८॥

**परमार्थविचारणेऽत्र चेत् सदसन्नीररजोविवेचिनीम् ।**
**कतकोपमितां मतिं महान् भजतां, मानवता कृतक्रिया ॥**

परम अर्थ ( सत्य ) के विचार में महान् पुरुष यदि सत् और असत् के जल और मल को विभक्त कर देने वाली निर्जलीतुल्य बुद्धि अपना ले तो मानवता कृतकृत्य हो जाय ॥४९॥

**श्रुतमस्ति न वंशदारणो भ्रमरः पङ्कजकोषमिच्छति ।**
**रसपायिभिरात्मनः करैरपकर्तुं, पटुरत्र किन्तु ना ॥**

हमने सुना है कि बाँस को छेद डालने वाला भौंरा अपने रसपायी हाथों से कमल कोष का कोई अपकार नहीं करता, किन्तु मनुष्य-मनुष्य होते हुए भी ऐसा करने में नितान्त पटु है ॥५०॥

**अलमत्र भृशं प्रलप्य, ते चरणावङ्गुलि-निर्गत-द्युती ।**
**तमसामपनुत्तये चितेः श्रयतां नः परिसेव्यतां स्वसः ॥**

इस पर अधिक प्रलाप करने से क्या ? दीदी, उँगलियों से किरन बिखेरते तेरे ये दोनों चरण हमारी चेतना के तम को हटाने हेतु सेवा के लिए हमें सुलभ रहे आएँ ॥५१॥

**वयमप्यनिषिद्धनिर्गमा भवतीमत्र विहातुमक्षमाः ।**
**गृहवद् वनमप्यसौ समं निमिकन्यासमितिः सुखं व्रजेत् ॥**

( एतदर्थ ) हम सबके भी यहाँ से चले जाने में कोई रुकावट नहीं है । आपको हम नहीं छोड़ सकतीं । निमिवंश की कन्याएँ वन भी साथ-साथ चलें जिस प्रकार यहाँ राजभवन में साथ-साथ आई थीं ॥५२॥

**यश एव यदीन्द्रियार्थतः प्रगुणं तत्कृतमत्र वैभवैः ।**
**ननु भारतभूमिरस्ति नः सकला सूः शरणं च सर्वदा ।।**

यदि इन्द्रियार्थ की अपेक्षा यश ही बड़ा है तो फिर वैभवों से क्या ? भारत की पूरी की पूरी भूमि हमारी माता और घर है, सदा सदा के लिए ।। ५३ ।। द्र० रघुवंश १४.३५

**पुरुषः पुरुषार्थचत्वरे पदवीं ज्ञातुमितोऽभिलष्यति ।**
**महिला समयं परीक्ष्य तां दिशतीत्येवमुभौ महाव्रतौ ।।**

संकेतः—समयः कालः, शास्त्रस्थितिश्च ।।५३।।

पुरुष पुरुषार्थ के चौरस्ते पर बने चबूतरे पर चढ़कर मार्ग जानना चाहता है और नारी समय ( मर्यादा, शास्त्र और युग ) के अनुसार उसका निर्देश करती है। इस प्रकार व्रत दोनों के महान् है ।।५४।।

**द्वयतापरिधेर्विमोक्षणादथवा लोकमतेर्विशोधनात् ।**
**पुरुषः प्रमदासखः क्षमो जनताध्वान्तमपोहितुं स्वसः ।।**

दीदी, स्त्री के साथ पुरुष जनता के अन्धकार को दूर कर सकता है या तो द्वैत की सीमाओं को काट कर, या फिर जनता को ही बदल कर ।।५६।।

**प्रमदाप्यथ मानवं श्रिता सदशं दीपमिव प्रभा तमः ।**
**परिवर्त्तयितुं प्रगल्भते जगतीमानसकल्मषं भृशम् ।**

संकेतः—दशा वर्त्तिः ।।५६।।

और स्त्री भी वर्त्तीसे युक्त दीपक पर प्रभा के समान पुरुष पर निर्भर रह जगत् के कालुष्य की अन्धेरी रात को काटने में भलो-भाँति समर्थ हुआ करती है ।।५६।।

**पुरुषः स्थितिमीदृशीं यदि प्रतिहन्तुं क्रमते स्वतस्ततः ।**
**अबला प्रबलात्वमीयुषी किमु न स्याज्जगती-शिवेच्छया ।।**

संकेतः—स्थितिः मर्यादा । जगतीशिवम् विश्वकल्याणम् ।।५७।।

किन्तु यदि उक्त मर्यादा पुरुष अपनी ओर से नष्ट करना चाहता हो तो अबला होते हुए भी नारी को प्रबला क्यों नहीं हो जाना चाहिए विश्वकल्याण के लिए ।।५७।।

तदलं विचिकित्सयाऽऽज्ञया परमेताः परिवर्धयस्व नः ।
विपिने निजकुक्षिजन्मभिः सममेता वयमप्यटाम यत् ॥

इसलिए, हिचकिचाहट छोड़ो, और इन हम तीनों को आज्ञा दो कि हम सब भी अपने अपने बालकों के साथ वन में साथ-साथ विचरण करें ॥५८॥

पृषती पृषतीदृशस्तव स्पृशतु स्वङ्घ्रितलं रसज्ञया ।
अपनोदयितुं व्यथां स्वसः शिशवोऽस्याश्चपलैश्च वीक्षितैः ॥

संकेतः—पृषती हरिणी शोभनं च तद् अङ्घ्रितलम् । रसज्ञा जिह्वा ॥५९॥

वहाँ हिरनी हिरनी से नेत्रों वाली तुझ दीदी के पैरों के उत्तम तलवे अपनी जीभ से चाटे और इसके छौने अपने चञ्चल नेत्रों से निहारें, व्यथा दूर करने हेतु ॥५९॥

धवलैः खग-पक्षतेः पुटैः प्रचयैश्चापि दलस्य भूरुहाम् ।
शुकपक्षविमिश्रितं भवेच्छयनीयं तव कोमलं वने ॥

संकेतः—पक्षतिः पक्षमूलम् । एवमेव दलस्येत्यत्रापि । तत्र पक्षपुटैर्धवलत्वम्, शुकपक्षैश्च नीलहरितत्वमिति शयनीयगतमनेकवर्णोत्तरच्छदत्वमुत्प्रेक्ष्यम् ॥

तेरे लिए वन में भी पक्षियों के धवल पंखों और वृक्षों की कोंपलो से कोमल विस्तर बनता रहे जिस पर सुग्गों की पाँखें भी बिछी रहें ॥६०॥

तव नेत्रजलं मनोव्यथाजनितं मानिनि ! पेशलाशया ।
अटवी हरितां शिरःस्थितैर्नवनीहारकणैर्विडम्बयेत् ॥

संकेतः—एतेन प्रकृतेः समदुःखत्वं सूचितम् ॥६१॥

हे मानिनि, अतीव कोमलचित्त वाली अटवी मनोव्यथा से जनित तेरे आँसुओं का अनुहार हरित तृणों की नोकों में गुँथे नवीन नीहारकणों द्वारा करती रहे ॥ ६१ ॥

कलवादिनि ! देववाहिनीपुलिनश्वेतमरालसन्ततेः ।
चलितेषु मनागपि स्थिरा तव रम्येषु कनीनिका भवेत् ॥

हे कलवादिनि, तेरी ( आँखों की ) पुतली थोड़ी देर के लिए गङ्गा की उज्ज्वल बालू में चल रहे श्वेत हंसों के उज्ज्वल छौनों की रम्य चाल पर टिकती रहे ॥६२॥

**अपि नाम कुहूनिशा विभामयतां यातु मुखेन्दुना तव ।**
**न भवन्तु यथोत्पलाकराः शितिपक्षेष्वपि मुद्रिताननाः ॥**

और तेरे मुखचन्द्र से अमावस भी पूनम बनती रहे जिससे अंधेरे पाख की रात में भी नीलकमल खिलते रहें मुँदें नहीं ) ॥६३॥

**तव वत्सलमञ्चलं स्मितैः सितिमानं विकिरद्भिरार्जवात् ।**
**विकचाम्बुरुहेक्षणाः क्षणं न हरिण्यश्चलयन्तु नाननैः ॥**

दीदी, तेरे सफेदी बिखेरते ( चन्द्ररूप ) स्मितों से विकच नेत्र कमल वाली हिरनियाँ अपने भोलेपन में तेरे वत्सल अंचल को अवश्य ही खीचें ॥६४॥

**अपि सोदरभावभाविताटवीशाखिगणाद् फलग्रहैः ।**
**वयमप्यनुभूतकानना भवितास्मो भवतीपदार्चनात् ॥**

संकेतः—फलग्रहैः भवतीपदार्चनादित्यन्वयः ॥६५॥

सगे भाईयों जैसे जंगली वृक्षों से फल ले लेकर और उनसे तेरे चरणों की पूजा कर, हे दीदी, हमें भी वनवासका अनुभव करने का अवसर मिल जाएगा ॥६५॥

**विसृजेन्नरमुग्रवेदनं प्रणिधायाश्मचयस्य मानसम् ।**
**शतशः कलनादमिश्रितं विपिने प्रस्रवणं ततस्ततः ॥**

दीदी तेरी इस उग्र वेदना का ध्यान कर पत्थरों के हृदय भी सौ सौ कलनादमिश्रित झरने वहाँ बहा बहा देंगें, उस जंगल में ॥६६॥

**ऋषिशोणितसंभवाथ सा सबलेन स्वहृदा स्वविप्रियम् ।**
**विषमात्मजनोदितामृतैः शमितप्रख्यमवोचदुज्झती ॥**

संकेतः—स्वाविप्रियमेव विषम् ॥६७॥

इतना सुनकर ऋषियों के रक्त से उत्पन्न वह सीता आत्मीय जनों ( बहिनों ) की उक्ति रूपी अमृत से शान्त हुए से अपने अनिष्ट को छोड़ती हुई अपने सबल हृदय से पुनः बोली ॥६७॥

**परिदेवनाविलमनोभिरेव मे प्रियकाङ्क्षिणीभिरपि यद् विचारितम् ।**
**यदपि स्थितिं तदपि रक्षयत् स्थितं, गृहमेधितास्तु परमा परन्तु वः ॥**

मेरा प्रिय चाहने वाली आप लागों ने व्यथित हृदय से भी जो विचारा वह भी यद्यपि मर्यादा के भीतर ही है, किन्तु मैं चाहती हूँ कि आपलोगों के लिए गृहमेधिता ही होनी चाहिए बड़ी ॥६८॥

**प्रियशतमवदन् यदप्यमुष्या व्यसनकृशा न हि जानकी तथापि ।**
**अनुसृतिमनुमोदितुं स्वसॄणामलमभवद्, गुरवो निजार्थबाह्याः ॥**

संकेतः—प्रियशतवदनक्रियायां व्यसनकृशपदार्थभूतानां स्वसॄणामपि कर्तृत्वेनान्वयः ॥६९॥

सीता के दुःख से दुःखी बहिनों ने सीता से बहुत सी मीठी बातें कहीं, किन्तु सीता अपने साथ वन चलने के प्रस्ताव पर बहिनों का अनुमोदन नहीं कर सकीं। गुरुजन स्वार्थपरायण नहीं होते ॥६९॥

**रघुकुलसुखसंपदां समृद्ध्यै निजभगिनीररुणद् गृहाय सीता ।**
**अपकृतिमभिलष्यति प्रियस्य प्रणयिजनो न हि कृच्छ्रगोपि यस्मात् ॥**

प्रेमी जन विपत्ति में पड़कर भी प्रेमी का अपकार नहीं चाहता। इसलिए सीता ने रघुकुल की सुख संपत्ति की वृद्धि के लिए बहिनों से घर में ही रहने का अनुरोध किया।

**अथ दिवसविरामाशंसिनि ध्वान्तपुञ्जे**
**पटहपटुनिनादैः सार्धमुज्जृम्भमाणे ।**
**भुवनविवरतुल्यं राजपुंसां मनांसि**
**विशति च भुजगांशः स्यन्दनं संयुयोज ॥**

संकेतः—राजपुरुषमनोवेशक्रियाकर्तृतया विवक्षितं ध्वान्तं शोकरूपम् । भुजगांशः लक्ष्मणः ॥७१॥

अब जब दिन के विराम का सूचक अन्धकार नगाड़ों के तीक्ष्ण स्वरों के साथ ( दिशाओं में ) फैलने लगा और भुवन विवर के ही समान राजपुरुषों के हृदयों में भी प्रवेश करने लगा तब भुजंग के अंश ( शेषनाग के अवतार लक्ष्मण ) ने रथ जोत लिया ॥७१॥

**अथ श्रियमिवोल्वणा विपदपामिव स्वच्छता-**
**मकालपवनः, कुहूर्विधुकलामिवानाविलाम् ।**
**विदेहतनयां महामुनितपःप्रसूतां शुभां**
**विशुद्धिमिव मानसीं तिरयदाः कठोरं जगत् ।**

इसके पश्चात् जैसे उत्कट विपत्ति श्री को, जैसे कालपवन जलों को स्वच्छता को, और अमावस्या चन्द्रकला को तिरोहित कर देती है वैसे ही महामुनियों के तप से प्रसूत, निष्कलंक और शुभ विदेहपुत्री को कठोर विश्व ने अपने मन की विशुद्धि के ही समान, तिरोहित कर दिया ।।७२।।

इति सनातनोपाह्व-श्रीमद्-रेवाप्रसादद्विवेदिकृतौ "सीताचरित"-नाम्नि
सर्गबन्धे साकेतपरित्यागो नाम चतुर्थः सर्गः ।। ४ ।।

❀

# पञ्चमः सर्गः

**सौमित्री रघुकुलकेतुपट्टिकां तामुत्सृज्य स्थितमिव दण्डमात्रमेकम् ।**
**रामाख्यं शुभमवदातमार्यधर्ममर्यादापरिघमियाय काननान्तात् ।।**

लक्ष्मण वन से राम के पास लौटे। राम यानी रघुकुल रूपी ध्वज का केवल दण्ड जो सीता रूपी पताका को छोड़ चुका है। राम यानी आर्यधर्म की मर्यादा का तन्नामक परिघ ( घेरा या अर्गला ) जो शुभ और उज्ज्वल है।

**अत्रैषा हिमकणसन्तते द्युनद्या सत्पात्रे पदजलजातमर्पयन्ती ।**
**प्रत्यूषे चलनयनं मृगीभिरह्नो वैभाती द्युतिरिव जानकी लुलोके ।।**

**संकेतः**—द्युनद्या गङ्गायाः । शोभनं च तत् पात्रं तटान्तर्भूः सत्पात्रम् ।।२।।

सीता, इधर, गंगा जी की बालू में दिखाई दी। किन्तु किन्हें ? चञ्चल चितवन वाली हिरनियों को। और कब ? प्रत्यूष की वेला में ठीक वैसी ही जैसी प्रभातश्री, गंगा की अतीव उज्ज्वल और हिमकण से आच्छन्न बालू में अपने चरणकमल अर्पित करती। [प्रभातश्री-पक्ष में सीता जी के चरण जैसे कमल] ।।२।।

**सात्यच्छं जलमिव सिन्धवे द्युसिन्धू रामाय प्रणयपरीतमेव सीता ।**
**स्वं भावं विकचमिवाब्जमाश्रयन्ती वैभाती रुचिरिव भास्कराय रेजे ।।**

**संकेतः**—भावोऽन्तःकरणम् । प्रकृतोभयनिष्ठोपमा ।।३।।

अभी भी सीता का हृदय समुद्र के लिए (वहीं उपस्थित) गंगाजी के जल के समान राजा राम के लिए अतीव स्वच्छ ही था। उस प्रकार का हृदय ली हुई वे प्रभातश्री जैसी ही लग रही थीं जो भगवान् भास्कर के लिए विकच अरविन्द लिए हुए थी (अर्थात् उस समय सीता राम के लिए स्वच्छ हृदय, गंगा समुद्र के लिए स्वच्छ जल और उषा सूर्य के लिए खिला कमल लिए हुए थीं।) ।।३।।

**वैदेही त्रिभुवनरक्षकस्य भर्तुर्निष्ठ्यूतं ज्वलदिव बिभ्रती महौजः ।**
**ऊषा च स्थगितदिवाकरा स्वगर्भे भ्रेजाते युगपदिलातलं स्पृशन्त्यौ ।।**

उषा और सीता का साम्य एक बात में और था। सीता अपने त्रिभुवनरक्षक पति का धधकता सा तेज धारण किए थीं और ऊषा भी अपने गर्भ में सूर्य को छिपाए थी। प्रभात की उस वेला में वे दोनों ही भूमितल का स्पर्श कर रहीं थीं (सीता चल रही थीं, ऊषा उतर रही थी) ।।४।।

**माञ्जिष्ठीकृतमनुरागमात्मभर्त्रे प्रत्यूषेऽरुणरुचिभिर्विभासयन्ती ।**
**जाह्नव्याः सितसिकते तटेऽत्र सीता चक्रस्त्रीसमसुखशीलतामवापत् ॥**

संकेतः—चक्रस्य चक्रवाकस्य स्त्री चक्रवाकी ॥५॥

जाह्नवो के श्वेत सिकता वाले तट पर सीता चक्रवाकी से सममुख हो रहीं थी—दोनों ही अपने प्रिय के लिए निहित हृदय के माञ्जिष्ठ राग को अरुण की किरणों से और उद्भासित कर रही थीं ॥५॥

**मुग्धाक्षी, क्व नु खलु यानि काननेस्मिन् किं तावच्छरणमवाप्स्यते हतायै ।**
**इत्येषा रघुकुलभास्करस्य पत्नी ध्यायन्ती सुरसरितं पदैः पुपाव ॥**

संकेतः—सुरसरितं पदैः पुपाव चलितुं प्रचक्रम इति यावत् ॥६॥

रघुकुल के सूर्य भगवान् राम की पत्नी मुग्धाक्षी सीता यह सोचती हुई अपने चरणों से गङ्गा को पवित्र कर रही थीं कि इस वन में मैं कहाँ जाऊँ और मुझ अभागिनी को रहने के लिए कौन सा स्थान मिलेगा ॥ ६ ॥

**नृणामाः प्रविकचचेतनाशिखानामुत्सङ्गः प्रकृतिविनिर्मितोपि लौल्यात् ।**
**सङ्कीर्णः समजनि पक्षिसन्ततीनां मुक्तानामिव बत पञ्जरप्रदेशः ॥**

आः ! चेतना की प्रविकच शिखा वाले मनुष्यों के लिए प्रकृति द्वारा उपहृत अपना विशाल उत्संग भी लौल्य के कारण उसी प्रकार छोटा पड़ गया जिस प्रकार उन्मुक्त पक्षियों के लिए पिंजरा ॥ ७ ॥

**तेनासौ कतिपयभित्तिभिर्निबद्धे गेहाख्ये वियति निवासमेव वासम् ।**
**मन्वानः श्रयति नु दासताममुष्य व्याकीर्णं भुवनमिदं करोति न स्वम् ॥**

संकेतः—आदिमानवस्य कदाचिदियमेव भावना स्यात् ॥ ८ ॥

इस कारण मनुष्य कुछ भित्तियों के बने घर नामक आकाश को ही अपना निवास मानता और एक प्रकार से उसी का गुलाम बन गया है । वह इस व्याकीर्ण भुवन को अपना नहीं मानता ॥ ८ ॥

**सन्त्येते जनपदसोदरेषु वन्या दन्धन्या उटजतलेषु ये महान्तम् ।**
**सन्तोषं प्रतिपदमाप्नुवन्ति, दिव्यैः संस्कारैः श्रमजनिते स्वतां श्रयन्ति ॥**

संकेतः—धान्यार्थकाद् धनधातोर्यङि निष्पन्ने दन्धने "धनगणं लब्धे" ( ४।४।८४ )—तिपाणिनीयेन शासनेनापि यति सति दन्धन्यपदं साधु ॥ ९ ॥

जनपद ( गाँवों ) जैसे उटजों के नीचे बसे वे वन्य अतीव धन्य हैं जो वहीं

महान् संतोष का अनुभव करते हैं और दिव्य संस्कारों के कारण अपने श्रम से उत्पन्न वस्तु को ही अपना मानते हैं ॥ ९ ॥

**धिक् कोयं निजरुचिनामको जनानां विश्वस्मिन् मनसिशयोस्ति भेदहेतुः ।**
**येनेदं जगदखिलं समुद्रशैल-नद्याद्यैः शकलितमेकतां न याति ॥**

धिक्कार ! विश्व भर में व्यक्ति-व्यक्ति के बीच फूट डालने वाला यह कौन है 'अपनी रुचि' नामक तत्त्व । धिक्कार ! समुद्र, पर्वत, नदी आदि ( जड़ सीमाओं ) से ( भी ) यह संपूर्ण विश्व खण्डित कर दिया गया और वह भी खण्डित ही रहा आ रहा है, एक नहीं हो पा रहा ॥ १० ॥

**एते ये भुवनतले चितेर्विकासा दृश्यन्ते निपुणतरं विभिद्यमानाः ।**
**सर्वैस्तैः सहचरसोदरैः समेता भ्राम्यामः, किमिति वियोगमाप्नवाम ॥**

भुवनतल पर ( पशु पक्षी आदि के ) अनेक भेदों में विभक्त जो चेतना के विकास दिखाई दे रहे हैं ये सब हमारे साथी और सगे हैं । इनके साथ हम कहाँ नहीं रहते । क्यों करें वियोग का अनुभव हम कहीं भी ॥ ११ ॥

**तातो मे जनक उदाहृतो जगत्या माता मे नृभुवनसूरियं धरित्री ।**
**भर्त्ता मे युगपुरुषोऽन्तरात्मभूतः, किं तद् यद् भवतु ममापि कापि सीमा ॥**

मेरे पिता संसार के पिता माने जाते हैं 'जनक' नाम से, मेरी माता भी है वह भूमि जिसने संपूर्ण मनुष्य-लोक को जन्म दिया है । मेरा पति है युगपुरुष, सबकी अन्तरात्मा । तब मेरी भी कोई सीमा क्यों होनी चाहिए ॥ १२ ॥

**व्यूहोऽयं परिमितिगोचरोऽपि सर्वो निस्सीमं ध्रुवमभिकाङ्क्षति प्रवेष्टुम् ।**
**वाहिन्या जलमिव सागरं, न लोके सङ्कोचं विबुधजनाः समाश्रयन्ते ॥**

यह जो सीमाओं में आबद्ध व्यूह है, यह सब का सब किसी निस्सीम और इसीलिए ध्रुव तत्त्व में प्रवेश करने हेतु उद्यत है, वैसे ही जैसे नदी का जल सागर में । इस कारण विद्वज्जन संकोच को नहीं अपनाते ॥ १३ ॥

**मानुष्यं वपुरधिगम्य यस्तु तत्त्वं निर्देष्टुं प्रभवति नापि वीक्षितुं स्वम् ।**
**मात्राभिर्विघटितचक्षुषस्तु तस्य सर्वत्र प्रसरति नाप्रतो न रात्रिः ॥**

**संकेतः**—मात्राभिः शब्दादिभिर्विषयैः ॥ १४ ॥

मनुष्यशरीर पाकर भी जो 'स्व'-तत्त्व का निर्देश और उसका स्वयं दर्शन नहीं कर पाता, मात्राओं ( शब्द स्पर्श, रूप, रस और गन्ध ) से विघटित दृष्टि

वाले उस व्यक्ति के समक्ष सर्वत्र निश्चित ही केवल रात्रि फैली रहा करती है ।। १४ ।।

**इत्येवं परिणतदोहदालसा सा संन्यस्ता विपिनचरीव संभ्रमन्ती ।**
**आत्मानं कथमपि भावभूमिकाभी रक्षन्ती परिसरभूमिमाजगाम ।।**

इस प्रकार, परिपक्व गर्भ से असलाई वह संन्यस्त सीता वन में वनेचरी सी घूमती और अपनी भावभूमिकाओं से स्वयं को बचाती हुई तटभूमि पहुँची ।। १५ ।।

**तत्रैषा गहनलतास्वभावकीर्णपुष्पौघक्षपितकठोरतं निकुञ्जम् ।**
**आवासं मनसि चकार पक्षिगीतैः स्फीताक्षैर्मृगशिशुभिश्च हृष्टभावा ।।**

वहाँ पक्षियों के गीत और स्फीतनेत्र मृगशिशुओं से प्रसन्नचित्त उस सीता ने किसी निकुञ्ज को अपना आवास बनाना चाहा गहन लताओं द्वारा अपने आप बरसाए पुष्पों से जिसकी कठोरता दूर कर दी गई थी ।। १६ ।।

**तत्रास्याः शुचिमुखचन्द्रदिव्यकान्तिलुप्तान्धं किसलयपुञ्जमुत्प्रवालम् ।**
**सौभाग्यादवहत सप्रसूनपातं वैतानीं शबलितभद्रपीठशोभाम् ।।**

संकेत:—भद्रपीठं राजसिंहासनम् । तस्योपरि यद् वितानम् तस्य शोभामानेकवर्णत्वात् तल्लक्ष्मीम्, अवहत धारयामास । अव्यक्तरागं विकसितं पत्रं किसलयम्, तथाविधमेवोद्भिद्यमानमंकुरात्मकं तत् प्रवालमिति भेदः ।। १७ ।।

उस कुञ्ज का किसलयपुञ्ज अपनी मनोहरता के कारण सीता जी के लिए अनेक रंगों से सुशोभित राजकीय भद्रपीठ साबित हुआ । उसकी अँधियारी सीताजी के मुखचन्द्र की दिव्यकान्ति से लुप्त हो चुकी थी, उसमें नए पत्रांकुर भी मिले हुए थे और उससे पुष्पवृष्टि भी हो रही थी ।। १७ ।।

**यत् तस्या व्रततिवनाधिदेवताभिर्दौर्हृद्यं सकुसुमपातमालुलोके ।**
**तज्जातं च्युतमकरन्दरेणु पूर्वं भावार्घ्यं, तदनु च पुष्पतल्पमस्यै ।।**

वहाँ लताकुञ्ज की अधिदेवियों ने पुष्प बरसा बरसा कर जो सीता के सौर्हृद (गर्भ) को देखा उसने पहले तो मकरन्द और रेणु से भरे भावपूर्ण अर्घ्य का कार्य किया, फिर वही सीता के लिए पुष्पशय्या भी बन गया ।। १८ ।।

**तां तस्मिन् मधुरसरूषितो लतानां तन्वीनां प्रशिथिलवृन्ततः पतन्तम् ।**
**व्याकीर्य प्रसवमसेवत द्रुमाणां मार्गे वै शिशुरिव तद्वनान्तवायुः ।।**

वहाँ सीता की सेवा वनान्तवायु ने की । मधुरस से मिश्रित वह (वनान्तवायु) तन्वी लताओं के प्रशिथिल वृन्त से गिरते पुष्पों को बिखेर रहा था ।। १९ ।।

**वल्लर्यो मरुति चले मिलद्भिरस्यै पत्राद्यैः करपुटमञ्जलिं बबन्धुः ।**
**कासाञ्चित् प्रकृतिरपि स्वतः सपर्यां व्यक्तीनां जगति चिकीर्षति प्रभावैः ।**

संकेतः—करपुटमेवाञ्जलिं बबन्धुरित्यन्वयः ॥२०॥

लताओं ने हवा के झोकों से परस्पर में मिलते पत्र आदि की अञ्जलि बाँधी और सीताजी को हाथ जोड़कर प्रणाम किया। संसार में कुछ ऐसे भी व्यक्ति होते हैं जिनकी सेवा उनके प्रभाव के कारण प्रकृति भी स्वतः करती है ॥२०॥

**नैसर्गो नियम इति प्रकृष्टभावाप्येषाऽऽस प्रणयशमी हि तत्र भर्त्रे ।**
**येनास्याः सकृदपि सप्रकाशमायं शोकाग्नेर्विकणिकयाप्यदूयतान्तः ॥**

संकेतः—सीतायाः शमीत्वन प्रणयस्य तद्गर्भस्थिताग्नित्वमाक्षिप्तम् ॥२१॥

नैसर्गिक नियम ही है, ऐसा कि उन्नतचित्त होने पर भी सीता अपने प्रति (श्रीराम) के लिए प्रणय की शमी बनी हुई थी। जिससे इसका प्रकाशमय हृदय भी शोकग्नि की एक छोटी-सी चिनगारी से दग रहा था ॥२१॥

**ज्ञानाख्ये मणिमयधाम्नि चित्तभूमौ**
**सस्नेहो मृदुतमभावनादशावान् ।**
**शोकाख्यां ज्वलनशिखामवाप्य दीप्रो**
**दीपो यः स हि जगतीह दुर्निवारः ॥**

संकेतः—चित्तभूमिः भूमिकारूपा, तत्र ज्ञानं मणिमयसौधरूपम्, तत्र स्नेहमेव तैलादिरूपं स्नेहम्, म्रदिष्ठभावनामेव दशां वर्त्तिकाम्, शोकरूपां च ज्वलनशिखामवाप्य यो दीपो दीप्यते स कुतो नु निवार्यतेति हृदयम् ॥२२॥

चित्तभूमि के ऊपर ज्ञान का जो एक मणिमय सौध है उसमें स्नेह (प्रेम तथा तैल आदि) से प्रपूर्ण एवं कोमल भावनाओं की दशा (स्थितियों तथा बत्ती) से युक्त और शोक की अग्निशिखा पाकर प्रज्वलित जो एक दीपक हुआ करता है उसे इस संसार में बुताया नहीं जा सकता ॥२२॥

**वैदेही कुवलयसोदरेऽक्षियुग्मे शोकाम्भस्तुहिनकणं यथा श्रयन्ती ।**
**पार्श्वीयाश्चलदलवल्लरीः प्रसूनं वर्षन्तीरनुशयतापतश्चकार ॥**

सीता की नीलकमल सी आँखों में ओस की बूँद-सी शोकाश्रु की बूँदें झिलमिला रही थीं। उन्हें देख आस-पास की लताएँ शोकमग्न हो रही थीं। उनके पत्ते काँप रहे थे और पुष्प गिर रहे थे ॥२३॥

**या पूर्वं शशिविशदां तनुं श्रयन्ती पीयूषद्रवमिव चक्षुषोरसिञ्चत् ।**
**तच्छोकोऽञ्चलचलनोहितस्तदानीं सर्वेषां नयनजलैर्बभूव सिक्तः ॥**

**संकेतः**—अञ्चलपदेन स्तनौ विवक्षितौ, "आँचरे"–ति भाषायां तथा प्राचारात् । ऊहितस्तर्कितः । शोकस्य स्वशब्दवाच्यतात्र न दोषः, तस्यात्र स्थायितयाऽविवक्षणात् । यस्य चात्र तथा विवक्षा स हि प्रकृतिगतः कारुण्यात्मा भावः । न चासौ वाच्यः । अत एव भरतेन रससूत्रे स्थायी नोल्लिख्यते ॥२४॥

चन्द्रमा जैसी तनुयष्टि वाली जो सीता इसके पहले आँखों में पीयूषद्रव सा बिखेर रही थीं स्तनों के कम्पन से अनुमित उसी का यह शोक प्रत्येक प्राणी के नयनजलों से सींचा जा रहा था ॥२४॥

**वामोऽस्या विधिरपि मार्गितुं प्रवृत्तश्छिद्राणि, प्रसवनिकारमुत्प्रसूय ।**
**तत्कालं स्वनजनितव्यथां मरालीमुत्पाद्याशनिमिव वारिदोऽभ्यवर्षत् ॥**

**संकेतः**—प्रसवनिकारमुत्प्रसूयाभ्यवर्षदिति मुख्योर्थः ॥२५॥

विधाता भी तो वाम था । वह छिद्रान्वेषण कर रहा था । उसने इसी समय सीता में प्रसववेदना को भी जगाया और सीता पर वह उसी समय गड़गड़ाहट से व्यथित हँसी पर बिजली चमकाकर बादल की भाँति बरस पड़ा ॥२५॥

**कालेऽस्मिञ्छ्रुतिसुखकूजितेष्वसक्तान्**
**विच्छायद्रुमतलराविणो विहङ्गान् ।**
**सम्पश्यन्नचटुलशावका मृगीश्च**
**वाल्मीकिः कविरतिविक्लवो बभूव ॥**

**संकेतः**—द्रुमाणां विच्छायत्वमपि प्रकृतिसमदुःखताप्रयुक्तमुन्नेयम् ॥२६॥

इन क्षणों में वृक्ष वनस्पति निष्कान्ति हो जाते हैं । उनके नीचे कानों में अमृत उडेलता चहचहाना बन्द कर पक्षी क्रन्दन करते दिखाई देते हैं । यहाँ तक कि हिरनियों के नन्हें नन्हें छोने भी अपनी चंचलता छोड़ स्तब्ध हो जाते है । यह सब देख वाल्मीकि जी भी अत्यन्त व्याकुल हो उठते हैं, वे कवि जो हैं ॥२६॥

**मानुष्ये वपुषि महात्मतां दुहानस्तत्कालं समुदयमाप कोऽपि रश्मिः ।**
**हृद्देशे सलिलनिधाविवोर्मिरार्षे सत्त्वानामप्रकृतिसंशयं विवृण्वन् ॥**

**संकेतः**—"भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियामि"—त्यमरः ॥२७॥

उसी क्षण उनके आर्ष हृदय में एक प्रकाशकिरण प्रकट होती है, समुद्र में

तरंग की भाँति, और उसमें चित्रित दिखाई देता है प्राणियों के अपकार का भय। यही है वह किरण जो मनुष्य शरीर में महात्मता को जन्म दिया करती है ॥२७॥

**भावानामनयनगोचरं रहस्यं सम्पश्यन्नुटजमुखेऽर्धदत्तपादः ।**
**वाल्मीकिः सवनविधिं समर्प्य शिष्ये जाह्नव्यास्तटभुवमाप्तुमुच्चचाल ॥**

अपने उटज के द्वार पर आधी डग भरे हुए वाल्मीकि वस्तुओं के बीच किसी अदृश्य रहस्य को देख रहे थे। सवनविधि अपने शिष्य को सौंप वे गंगातट की ओर तेजी से चल पड़े ॥२८॥

**साम्राज्यं समजसमाजगं सवित्री मानुष्यं सहृदयसंज्ञिका प्रवृत्तिः ।**
**सङ्केतैस्तरुमृगपक्षिभिः प्रदत्तैः साहस्रीमलभत मूर्तिमादिसूरौ ॥**

उस समय वृक्षों, मृगों और पक्षियों द्वारा दिए संकेतों से आदि कवि की सहृदयता हजारगुनी बढ़ जाती है। यही सहृदयता तो वह रहस्य है जो समज ( तिर्यग्योनियों के समूह ) और समाज ( मानव समूह ) दोनों पर मानव साम्राज्य स्थापित रखता है ॥२९॥

**सत्यं भो, नियतिरितीरिता श्रुतज्ञैः काप्येका भ्रमयति देहिनो विपत्सु ।**
**यच्चक्रं विगलितपल्लवासु दोषास्पृष्टासु व्रततिषु लक्ष्यते प्रकाशम् ॥**

सचमुच, वेदविद् विद्वानों ने जिसे नियति कहा है वह सभी प्राणियों को विपत्तियों में घुमाती रहती है। निर्दोष लताओं के गलते पत्तों में उसी का न चक्र दिखाई देता है ? ॥३०॥

**बोधाख्यज्वलनशिखैव कापि सूरिर्वेवेक्ति स्वपरमनोगतान् स भावान् ।**
**तद्दृष्टावजडजडात्मकः स्वभेदः कार्पण्यात् प्रकृतिकृतान्न सिद्धिमेति ॥**

**संकेतः**—किं तावत् सूरित्वमिति प्रश्न उच्यते "कापि बोधाख्यज्वलनशिखैव सूरि"—रिति। स सूरिः सर्वमनोगतान् भावान् वेवेक्ति भृशं विविनक्ति पृथक्तया वेत्तीत्यर्थः, विचिर् पृथग्भावे, ततो यङि लटि रूपम्। प्रकृतिकृतात् कार्पण्यात् योऽयं जडचेतनात्मा भेदः स सूरिदृशि न सिद्ध्यतीत्येका योजना, जडचेतनात्मा भेदः प्रकृतिकृतात् कार्पण्यात् सिद्धिं नैतीति द्वितीया। तत्र सूरिपक्षे कार्पण्यं भावकतातिशयः ॥३१॥

सूरि ( कवि और विद्वान् व्यक्ति ) ज्ञानाग्नि की शिखा हुआ करता है। वह स्वगत और परगत दोनों प्रकार के भावों का विवेचन करता है। उसकी दृष्टि प्रकृतिकृपण ( निरतिशय भावक ) रहती है और वह जड़ और चेतन का भेद नहीं करता ॥३१॥

**वल्मीकं क्रिमिजनितं स्वसिद्धिहेतुमाचार्यं स तु मनुते न भूतिमात्रम् ।**
**विश्वस्मिन् कविरिति संज्ञितः परां तां वाग्रूपां हृदयनदीं य उज्जिगीर्षुः ॥**

कवि नामक जो व्यक्ति इस विश्व में वाग्रूपा उस परा हृदयनदी ( कविता ) को प्रकट करना चाहता है वह तो क्रिमिओं द्वारा उत्पादित बल्मीक को भी अपनी सिद्धि में आचार्य मानता है [ अतः आदि कवि वाल्मीकि कहलाता है ] केवल वैभव को ही नहीं ॥ ३२ ॥

**आर्योऽसौ हृतहृदयस्ततस्तदानीं वैक्लव्यात् स्खलितपदो यथाकथंचित् ।**
**आरण्यान् द्रुमतृणवल्लरीसमूहान् संपृच्छन्नचलदनामयप्रवृत्तिम् ॥**

इसलिए आर्य हृदय वाले ये ( वाल्मीकिजी ) भी उस समय व्याकुलता से लड़खड़ाते हुए जिस किसी प्रकार चले, उस बन के वृक्ष, तृण और लताओं से कुशल प्रश्न करते हुए ॥ ३३ ॥

**तेऽप्यस्मै स्वपरविभेदवर्जिताय शाखाभिः कलरवमञ्जुभिश्चलाभिः ।**
**मर्यादां प्रकृतिकृतां प्रमाणयन्तः स्वोद्गारान् मुनिवदुदीरयाम्बभूवुः ॥**

**संकेतः**—मुनयोऽपि मौनेनापि स्वोद्गारमुदीरयितुं क्रमन्ते, तरवोऽपि ।

वे ( वृक्ष आदि ) भी स्व और पर के भेद से दूर इस महर्षि के समक्ष कलरव से मंजुल और चञ्चल शाखाओं से अपने उद्गार प्रकटकर रहे थे, किन्तु मुनियों के समान ( मौन भाषा में ) प्राकृतिक मर्यादा का निर्वाह करते हुए ही ॥ ३४ ॥

**मुनिस्ततः स्वच्छजलान् जलाशयान् हृदः स्वकीयस्य सहोदरोपमान् ।**
**विभूतिमाद्यां प्रकृतेर्विलोकयन्नुपागमत् तां सरितं जगच्छुभाम् ॥**

**संकेतः**—प्रकृतेराद्या विभूतिर्जलमेव, "अप एव ससर्जादावि"—ति ॥३५॥

मुनि वाल्मीकि स्वच्छजल वाले अतएव अपने हृदय के सगे भाई जैसे और प्रकृति की प्रथम विभूति जलाशयों को देखते हुए उस विश्वमंगल नदी ( गंगा ) के पास जा पहुँचे ॥ ३५ ॥

**शतैः सहस्रैश्च युगैस्तपस्विनो भगीरथस्यार्यमतेर्जगत्त्रये ।**
**जगच्छिवां कर्मठतां वितन्वतीं शरीरिणां दैवतभावभूमिकाम् ॥**

वह नदी आर्यमति भगीरथ की उस कर्मठता को सैकड़ों और हजारों वर्षों से तीनों लोगों में प्रकट करती आ रही थी जो विश्व भर के लिए कल्याणकारी थी और जो शरीरधारी प्राणियों के लिए देवभाव की भूमिका थी ॥ ३६ ॥

**निजाक्षिबिम्बैर्यमुनामलाम्भसा विमिश्रतोयामिव संविधित्सुभिः ।**
**पिपासितैरेणचयैरुपासितां सुवं यथार्त्तैः पृथुकैरितस्ततः ॥**

माता के पास भूखे बच्चों के समान प्यासे हिरन उसमें यहाँ वहाँ बिखरे दिखाई दे रहे थे और वे अपनी आँखों की परछाँई से उसे मानों यमुनाजल से मिश्रित बनाना चाह रहे थे ॥ ३७ ॥

**स हंसकारण्डवकेलिनिर्भरां प्रसन्नतोयां सितशर्करां च ताम् ।**
**उपान्तवानीरनिकुञ्जनिर्गतैरुपास्यमानां पतगैरवैक्षत ॥**

मुनि वाल्मीकि ने देखा कि उस (पुण्यतोया गंगा) में हंस और कारण्डव (बतख) भरे पड़े हैं, उसका जल स्वच्छ है और उसकी बालू सफेद। उसमें पास के वेतसकुञ्जों से निकल कर आए अन्य पक्षी भी छाए हुए थे ॥ ३८ ॥

**अवासयष्टिः पुलिने परिभ्रमञ्छिखिव्रजो बन्धुरगात्रयष्टिभिः ।**
**अनाययद् यां परभागसौभगं स्थलीं वदातामिव रङ्गवल्लिभिः ॥**

संकेतः—"परभागो गुणोत्कर्षः" इति वचनात् वर्णान्तरव्यतिकराज्जायमानं वर्णान्तरं परभागः। स च रङ्गवल्ल्युपमया गतार्थः ॥ ३९ ॥

वासयष्टियों से रहित मयूर उसकी बालू में यहाँ वहाँ घूम रहे थे। वे अपनी ऊँचीनीची और सुहावनी गात्रयष्टि से उसकी उजली भूमि पर अनेक वर्णों की रांगोली सी बना रहे थे ॥ ३९ ॥ गंगा वर्णन के लिए द्र० स्वातन्त्र्यसंभवम् २.९-२३.

**प्रसन्नतोयां सरितं विलोक्य तां स शान्तचेताः स्थिरतामुपागतः ।**
**भवन्ति तीर्थानि शुभाशुभं प्रति प्रसादसौम्या मुकुरा महात्मनाम् ॥**

मुनि ने देखा कि वह नदी प्रसन्नतोया है तो उनका चित्त शान्त हुआ और वे कुछ स्थिर हुए। बात यह है कि तीर्थस्थान महात्मा जनों के लिए उज्ज्वल दर्पण हुआ करते हैं शुभ या अशुभ को प्रतिबिम्बित कर देने वाले ॥ ४० ॥

**वनान्तवायुः पटुमर्मरैः स्वरैः प्रपूर्य वेणून् सुषिरेषु तत्क्षणे ।**
**प्रवाद्य तालांश्च चकार गीतिमन्मुनेः पदं काव्यरसैः स्वयं वृतम् ॥**

उस समय वनान्त-पवन सच्छिद्र वाँसों को पटु मर्म स्वरों से भर-भर कर तथा तालवृक्षों की ताल बजा बजा कर मुनि वाल्मीकि के गीतिमय आश्रम का काव्यरसों के द्वारा स्वयंवर करा रहा था ॥४१॥

**वनस्थली - दैवत - गीतिरीतिभिर्यथोच्चवृक्ष - च्युत - पुष्पराशिभिः ।**
**दिशां चयं भूमितलं च सर्वतः कविः स साक्षादकरोत् प्रपूरितम् ।।**

कवि ने देखा कि उस समय वनस्थली की ( वन— ) देवियों की रीतिबद्ध गीतियों और ऊँचे ऊँचे वृक्षों से गिरी पुष्पराशियों से दिशाएँ तथा भूतल भरते चले जा रहे थे ।। ४२ ।।

**व्यचारयत् सोऽथ नवं पुरातनं पुरातनं किं च नवं विभाव्यते ।**
**अवश्यमेवात्र परोक्षविग्रहा प्रवर्त्तते क्रान्तिरुपात्तसंक्रमा ।।**

तब उसने सोचा कि 'नूतन वस्तु पुरातन रूप में दिखाई दे रही है तथा पुरातन वस्तु नूतन रूपों में, निश्चित ही वहाँ कोई क्रान्ति करवट ले रही है प्रच्छन्न रूप में' ।। ४३ ।।

**किमित्ययं प्राकृतिकः क्रमो झटित्यपास्य वेषं प्रथमं शुचाश्चितम् ।**
**नवं ममैवात्र पुरः प्रपश्यतो बिभर्त्ति हर्षान्नटनो यथा, वने ।।**

इस वन में प्रकृति का यह कैसा क्रम ? यह एक क्षण पहले दिखाई दे रहा था शोकाञ्चित। अब उस रूप को छोड़कर, मेरे देखते देखते नट के समान खुशी का नया रूप धारण करता चला जा रहा है। आखिर क्यों ।। ४४ ।।

**इदं विचारादपि वर्त्तते परं पटैः क एतास्तरुवल्लरीः स्थलीः ।**
**पिशङ्गपीतैर्नवनीलमेदुरैरचित्रयत् कस्य कृते महात्मनः ।।**

यह विचारातीत है कि इस तरुवल्लरियों और स्थलियों को, पिशंग, पीत, और नवीन मेघ जैसे नीले रंगों से किसने चित्रित कर दिया है और किस महात्मा के लिए ।।४५।।

**इतः प्रभालेपिषु केसरद्रुमेष्वहो वदातद्युतिपुष्पमौक्तिकैः ।**
**स्थले स्थले यामुनगाङ्गसंगमप्रभङ्गिमा किं नु निशाम्यते वने ।।**

संकेतः—केसरा बकुला मौलिश्रीवृक्षाः । यामुनं गाङ्गं-चेति तज्जलपरम् । ततो न तद्धितपौनरुक्त्वम् ।।४६।।

वन में जो ये कान्ति विखेरते मोलसिरी के वृक्ष है इनमें सफेद कान्ति के पुष्प-रूपी मौक्तिकों द्वारा जहाँ तहाँ गंगायमुना के जल के संगम की छबि क्यों प्रदर्शित की जा रही है ।।४६।।

**द्रुमोत्पलैः काननदेवताशिरःसुशोभितैर्मेदुरिता वनस्थली ।**
**कथं नु दृष्टिं भ्रमरावलीसखीं करोत्यकाण्डे मकरन्दनिर्भरैः ।।**

संकेतः—द्रुमोत्पलः कर्णिकारः, अमलतासेतिनाम्ना व्यपदिश्यमानः । कर्णिकारेषु मकरन्दः शून्यप्राय एव भवति तथापि तन्निर्भरतात्र लोकोत्तरत्वाय साधुरेव ॥४७॥

वनदेवियोंके सिर पर सुशोभित कर्णिकार पुष्पों से मेदुरित यह वनस्थली अपने मकरन्दनिर्भर इन पुष्पों से मेरी दृष्टि को भ्रमरावली की सहेली क्यों बना रही हैं ॥४७॥

**स्थले स्थलेऽशोकपलाशमल्लिकाप्रसूनपुञ्जैः सितरक्तपीतकैः ।**
**चतुष्कभङ्ग्या पतितैः कथं स्थली सपत्रपङ्क्तिः प्रमदेव रोचते ॥**

जगह जगह अशोक, पलाश और मल्लिका के श्वेत, रक्त और पीत प्रसूनपुञ्जों के चौकों से यह स्थली पत्रपंक्तियुक्त प्रमदा सी क्यों लग रही है ? ॥४८॥

**इमानि किं स्नानजलानि सैकतं विलङ्घ्य किंचित् प्रसृतानि पुष्पकैः ।**
**परागगन्धैश्छुरितानि चाभितो विभान्ति पानानि यथा वनौकसाम् ॥**

स्नानयोग्य ये जल बालू पर कुछ आगे तक फैलकर तथा विकीर्ण पुष्पों और उनके परागसौरभों से सुगन्धित होकर वनवासियों के द्वारा पेय आसव से क्यों प्रतीत हो रहे हैं ॥४९॥

**दिशस्सु किं कश्चन मङ्गलध्वनिर्ध्वनत्यपूर्वस्वरसाधुतामयः ।**
**तृणानि कृत्स्नान्यपि केसरद्युतिं कुसुम्भगन्धांश्च किरन्ति किं मुदा ॥**

दिशाओं में अपूर्व स्वर की अपूर्व साधुता से मिश्रित कोई मङ्गल ध्वनि क्यों सुनाई दे रही है और सबके सब तृण केसर की कान्ति और कुसुम्भ की सौरभ बड़ी प्रसन्नता के साथ क्यों बिखेर रहे हैं ॥५०॥

**वनान्तवायुर्द्रुमपर्णसंहृतीर्विभेद्य पुष्पासवसेवनोन्मदः ।**
**स्वयं नटत्यार्जवशालिनीस्तथा किमित्ययं नाटयते च वल्लरीः ॥**

वृक्षों के जुटे पत्ते अलग कर और पुष्पों के आसव पीकर मदमाता वनान्तवायु स्वयं नाच रहा है और लताओं को भी नचा रहा है । क्यों ? ॥५१॥

**कथं च भृङ्गावलिमत्र संभ्रमात् सरस्वतीपाणिकुशेशयेरिताम् ।**
**समन्त्रतन्त्रीमिव मूर्च्छयन्त्यमूर्दिशः पलाशप्रसवारुणाननाः ॥**

पलाश के पुष्पों से अरुण मुख वाली ये दिशाएँ सरस्वतीद्वारा अपने हाथ से बजाई समन्त्र तन्त्री ( वीणा के तार ) सी भृङ्गावलियों को क्यों घुमाती जा रही हैं ॥५२॥

**इयं पिकानां सहकारमञ्जरीकषायकण्ठोद्भविनी कुतस्तराम् ।**
**नवाङ्गनानामिव गीतिपद्धती रुतिः समुच्छ्वासयतीव काननम् ॥**

नवाङ्गनाओं की गीतिधारा सी कोयलों की यह, सहकारमञ्जरीकषायित कण्ठों से निकलती रागिनी वन को समुच्छ्वसित क्यों कर रही है ॥५३॥

**कुरङ्गनाभीसुरभीकृता इमे दिशां कपोलाः कथमाश्वकासति ।**
**प्रपूरितं कस्य कृते च कुङ्कुमद्रवैरिदं व्योमसरो महौजसः ॥**

दिशाओं के मृगमद से सुरभित कपोल आः, क्यों चमक रहे हैं और किस महातेजस्वी के लिए यह आकाश रूपी सरोवर केसरद्रव से भर दिया गया है ॥५४॥

**प्रियङ्गुरेषा सहकारकोऽप्यसौ प्ररूढपत्रौ च परागिणौ च किम् ।**
**द्विजाङ्गना मङ्गलगीतिभिः परप्रमोदतः संगमयन्ति ताविमौ ॥**

ये हैं प्रियंगु और सहकार। दोनों पर पत्ते और पराग जम चुके हैं। द्विजाङ्गनाएँ इनका सङ्गम मङ्गलगीतियों द्वारा बड़ी ही प्रसन्नता के साथ क्यों करा रही हैं ॥५५॥

**इयं च मे दन्तुरिता स्वकुड्मलैः प्रतिप्रतानं वनमल्लिका सितैः ।**
**नवा वधूटीव नताङ्गगौरवा करोति दृष्टिं वशवर्तिनीं कथम् ॥**

प्रत्येक टहनी पर सफेद कलियोंसे उद्भासित, अतएव नवीन नताङ्गी वधूटी सी यह वनमल्लिका मेरी दृष्टि को वश में क्यों कर रही है ॥५६॥

**गतेद्युरेवेयमहो मृगी कुशं ममैव पाणिस्थितमाजिहीर्षति ।**
**विहाय तच्चापलमुन्मदां गतिं मदातिरेकेण बिभर्त्ति साद्य किम् ॥**

देखो तो, यह मृगी कल ही मेरे ही हाथ में रखा कुश खींच रही थी और आज ही यह अपनी वह चपलता छोड़कर मदातिरेक से उन्मद डग भरती दिखाई दे रही है। क्यों ? ॥५७॥

**प्रसूनरेणुः किमु शक्रचापतामवाप्यते व्योम्नि लताप्रतानकैः ।**
**अवश्यमस्मिन् पटमण्डपे क्वचित् क्लमच्छिदां कोपि महाभटोऽश्नुते ॥**

लताओं की शाखाएँ पुष्पपराग को आकाश में इन्द्र धनुष सा क्यों तान रही हैं। निश्चित ही इस पटमण्डप में कहीं कोई महान् भट विश्राम कर रहा है ॥५८॥

**अरण्यमेवं श्रितभिन्नभूमिकं निशाम्य कृत्वा च मनस्तथाविधम् ।**
**शरत्सरो हंस इव प्रसन्नधीर्निमीलिताक्षः स समाधिमाययौ ॥**

संकेतः—तथाविधमरण्यसदृशं भिन्नभूमिकमित्यर्थः ।।५९।।

इस प्रकार वन को भिन्न भूमिका में पहुँचा देखा तो ऋषि का मन भी किसी भिन्न ही भूमिका में जा पहुँचा, शरत्काल में हंस के समान उनकी बुद्धि प्रसन्न हो गई और आँखों की पलकें छँप गई और उन्हें समाधि लग गई ।।५९।।

**कविः समाधिं गमितः स्वमानसे विवेकबीजाद् यमवापदङ्कुरम् ।**
**दुदोह भूतार्थमहौषधिं ततो, न योगभूमौ प्रथते परोक्षता ।।**

संकेतः—तत इति द्वितीयार्थे तसिः, सार्वविभक्तिकत्वात् । अपरोक्षतेति छेदे नेति प्रश्ने ।।६०।।

समाधि में पहुँचे कवि ने विवेक के बीज से जो एक अंकुर प्राप्त किया उससे उसने यथार्थ की महौषधि को दुह लिया । योगभूमिका में परोक्षता नहीं चलती ।।६०।।

**स खलु विमलमेधाः सूरिराद्यः समाधौ**
**जनहृदयविकारात् काननं सेवमानाम् ।**
**फलितसुतयुगां तां जानकीं भारतीयै-**
**र्व्रततिततिमरुद्भिः सेव्यमानामपश्यत् ।।**

विमल बुद्धि के धनी उस आदिकवि ने समाधि में देखा कि जनक जैसे योगी की पुत्री सीता, जनता के हृदय के विकार के कारण वन में आई हुई है, उसने दो पुत्रों को जन्म दिया है तथा उसकी सेवा इस भारत भूमि की लताएँ, उनकी वायु और उनकी देवियाँ कर रही हैं ।।६१।। मरुत् = वायु तथा देवगण ।

**विलोक्य तं क्रौञ्चवधं तदक्षिणी तथा च सीतापरिरक्षणं वने ।**
**बभूवतुर्मानुष-मानुषेतर-द्वये विवेकद्युतिभिर्विकस्वरे ।।**

वालमीकि वे ही हैं जिन्होंने एक दिन क्रौञ्चवध देखा था । आज वे ही वन में सीतापरिरक्षण देख रहे हैं । ऐसा देख उनकी आँखें मनुष्य और मनुष्येतर विश्व के बीच के अन्तर की पहचान से खिल उठीं ।।६२।। मनुष्य ने मनुष्येतर क्रौञ्च को मारा था और मनुष्येतर लता आदि ने मनुष्य (सीता) की रक्षा की ।

**ततः स्वतो निश्चितिपीठमाश्रितः कविः स्वकर्त्तव्यपथे महामतिः ।**
**अकम्पपादं चलितो मनस्विनीमुपेयिवांस्तां वनदेवतासखीम् ।।**

संकेतः—स्वतो न तु परप्रेरणया । अकम्पपादं यथा स्यात् तथा चलितः, दृढतया चलितः, न तु विचिकित्सयेति भावः । सेयं कवेः सक्रियता ।।६३।।

तब कवि ने स्वतः निर्णय लिया और अपने कर्त्तव्य पथ पर विना लड़खड़ाहट के चलता आ रहा वह महामति वनदेवियोंके साथ लताकुञ्ज में अवस्थित जानकी के पास पहुँचा ॥६३॥

**स कैश्चिद्दृशाभास्वरसौम्यलोचनद्वयारविन्दारुणरश्मिभिः कविः ।**
**स्थलेऽत्र पिष्टातकमुत्क्षिपन्निव व्यभासताऽस्यै च सुतद्वयाय च ॥**

संकेतः—अन्योऽपि प्रियजनस्य स्वागताय गुलालादिपदवाच्य-पटवासपिष्टातकादीनि द्रव्याणि क्षिपति ॥६४॥

वे आदि कवि अपने भास्वर किन्तु सौम्य नेत्रकमलों की किन्हीं अरुण रश्मियों से उस सीता और उसके दोनों शिशुओं के लिए मानों कुङ्कुम विखेर रहे थे ॥

**अभिनवजनिताभ्यामोजसा वेष्टिताभ्या-**
**मिह यमलसुताभ्यां सार्धमेतां स सूरिः ।**
**जगति निजमहिम्ना सूर्यवंशे प्रभात-**
**द्युतिमिव जनयन्तीं संप्रतिष्ठां ददर्श ॥**

संकेतः—यमलौ सहजौ ॥६५॥

कवि ने देखा कि इस लताकुञ्ज में सीता के पास ओज से परिवेष्टित दो नवजात शिशु थे और प्रभातद्युति के समान वह सूर्यवंश को अपने प्रभाव से संसार में प्रतिष्ठित कर रही थी ॥६५॥

**जनकदुहितुरस्या मञ्जुलां कायकान्ति**
**प्रजननसमयेऽपि स्वर्णवर्णां पुरीव ।**
**विपिनपरिसरेऽपि प्रेक्ष्य तुष्टः स जातो**
**जयति हि निजराष्ट्रस्वास्थ्यमेवार्षदृष्टौ ॥**

संकेतः—'स्वस्थे नारीदेहे नागाभूमौ यथा प्रसूतिभ्यः,
भवति न कोऽपि विकारो राष्ट्रस्वास्थ्यं हि तेन लक्ष्येत' ॥६६॥

कवि ने देखा कि योगिराज जनक की पुत्री सीता के शरीर की कान्ति प्रसवकाल में भी नगर के ही समान वन में भी सुवर्ण की सी ही दिखाई दे रही थी तो उन्हें संतोष का भी अनुभव हुआ । बात यह है कि आर्ष दृष्टि में सबसे बड़ा हुआ करता है अपने राष्ट्र का स्वास्थ्य ही ॥६६॥

**मुनिरपि जगदम्बाज्योतिषि स्नातचेता**
**विमलमतितटीकस्तत्क्षणं हन्त जातः ।**
**न हि विघटनमूलं प्रातिभं ज्योतिरार्षे**
**प्रभवति शिवचित्ते प्रेतशूलं यथैव ॥**

संकेतः—जगदम्बाज्योतिः मातृशक्तिप्रकाशः। सा च शक्तिः रचनात्मिका। तद्दर्शनमेवार्षप्रतिभाकर्म। तत्र प्रेतशूलं यथा विघटनात्मकं दर्शनं नोदेति, न च प्रसरति ॥६७॥

कवि वाल्मीकि का चित्त भी ( सद्यः प्रसूता सीता के दर्शन से ) जगदम्बारूपी ज्योति में नहा लिया और उनकी बुद्धि विमल हो गई। बात यह है कि ऋषियों के शिव चित्त में प्रतिभा की चितास्तंभसी अशिव और विघटनकारी ज्योति को जन्म नहीं मिलता ॥६७॥

**रघुपतिदयितापि स्वान्तरात्मानुकारि-**
**विमलिमपरिवीतं तं विलोक्यादिसूरिम् ।**
**अतिधृतिभिररण्यस्याधिदेवीभिरर्चा**
**व्यधित कुसुममाध्वीं पत्रपात्रे निधाय ॥**

संकेतः—अतिधृतिभिरिति तासां परविपदि सेवाधर्मित्वमागूरितम्। पत्रपात्रं द्रोणम्। माध्वमिति मधुपर्कव्यञ्जकम्। वनदेवीभिरिति स्वाशुचित्वपैशुन्याय ॥६८॥

उधर भगवान् राम की प्रिया सीताजी ने भी अपनी अन्तरात्मा के ही समान विमलता से ओतप्रोत आदि कवि को देखा तो पत्तों के पात्र में कुसुममधु रखवाकर अतीव धैर्यशाली वनदेवियों से उनका मधुपर्क संपन्न कराया ॥६८॥

**व्रततिविटपिनश्च प्राच्यदेशस्थ शिष्या**
**इव विनयपरीतास्तत्कवेरङ्घ्रितीर्थे ।**
**मृदुविपिनमरुद्भिः पुष्पवृष्टिं विधाय**
**विदधुरिव सपर्यामन्तरात्मप्रवृत्ताम् ॥**

संकेतः—अन्तरात्मप्रवृत्तां न तु बलादापादिताम् ॥६९॥

भारत वर्ष के विनयशाली शिष्यों के समान लतावृक्षों ने भी उस कवि के चरणतीर्थ में अपनी पूजा अर्पित की, वन के मृदु पवन से पुष्पवृष्टि करवा कर। वह पूजा उनकी अन्तरात्मा से प्रेरित थी ॥६९॥

**पूजामेतां कविरपि महान् स प्रतीच्छच प्रसीद-**
**न्नन्तर्वाणीं बहिरुपगतामन्ववादीदितीव ।**
**पुत्रि ! स्वस्ति स्पृशतु चरणस्ते भुवं नः सुताभ्यां**
**राष्ट्रापत्ति क्षपयितुमिमे निर्मिता आश्रमा नः ॥**

संकेतः—चरणपदेनाचारोपि, भूपदेन च भूमिकापि गम्यते। सुताभ्यामिति सहयोगे तृतीया ॥७०॥

उस महान् कवि ने भी उस पूजा को ग्रहण किया और अन्तरात्मा की बाहर आई वाणी का अनुवाद करते हुए वे बोले—'पुत्रि, तेरा कल्याण हो इन दोनों पुत्रों के साथ तेरे चरण हम लोगों के स्थान का स्पर्श करें। हमारे आश्रम तो राष्ट्र की आपत्ति दूर करने हेतु ही बनाए गए हैं ॥७०॥

**आज्ञामेतां जनकतनयाप्यादधानाशु मूर्ध्नि**
**वन्यद्वन्द्वैर्विधृततनया जाह्नवीं तां प्रणम्य ।**
**सिक्ते सूरेस्तरुणकरुणैः पावनैर्दृष्टिपातै-**
**र्मार्गे स्वीयं चरणकमलं संविधित्साञ्चकार ॥**

संकेतः—आशुपदेन क्षणमात्रं विचारमग्नतापि आक्षिप्यते ॥७१॥

जानकी ने भी मुनि की इस आज्ञा को तत्काल शिरोधार्य किया और वे दो वनवासियों से दोनों बच्चे रखवा कर वहीं वह रही गंगाजी को प्रणाम कर चल पड़ी, उस मार्ग पर जो कवि के तरुणकरुण और पावन दृष्टिपातों से पवित्र था ॥७१॥

इति सनातनोपाह्व-श्रीमद्-रेवाप्रसादद्विवेदिकृतौ "सीताचरित"-
नाम्नि सर्गबन्धे कुमारप्रसवो नाम
पञ्चमः सर्गः ॥ ५ ॥

❀

# षष्ठः सर्गः

**सुतयुगसहिता विदेहपुत्री प्रसवनिकारमुदस्यतः प्रवातात् ।**
**विपिनपरिसरान्मुनेः पदं सा पितुरिव धाम परं शनैरवापत् ॥**

संकेतः—प्रवातस्य प्रसवप्रातिकूल्याभावविवक्षयात्र सीतया उत्तमं स्वास्थ्यं सूचितम् ॥ १ ॥

दोनों पुत्रों के साथ सीता जी प्रसवश्रम हटाते प्रवात वनप्रदेश से मुनि वाल्मीकिजी के आश्रम आ पहुँची । वह उनका दूसरा नैहर ही था ॥ १ ॥

**पृषतचटुलिकासु दन्तुराभिः सितशबलाभिरसौ स्मितच्छटाभिः ।**
**पुनरिव मुनिधाम रामजाया व्यधित पवित्रमपि स्वतः पवित्रम् ॥**

हिरनों की चटुलता पर उत्पन्न सितशबल स्मितच्छटाओं से सीता जी मुनि के उस स्वतः पवित्र आश्रम को और पवित्र बना रही थीं ॥ २ ॥

**परिणतफलभङ्गुराङ्गयष्टिं व्रततितर्तिं नयनैर्निपीय पाण्डुम् ।**
**अशिशिरममुचद् दशां स्वकीयां प्रसवकृतामनुचिन्त्य बाष्पमेषा ॥**

परिपक्व फल से टूटती टहनियों वाली लताओं को देखकर सीता उष्ण आँसू बहाती थी प्रसव के समय को अपनी दशा का स्मरण कर ॥ ३ ॥

**अकृत मनसि—'हन्त हन्त नारी जगति समर्पितचेतना परार्थे ।**
**न खलु न खलु विद्यतेऽत्र तस्या अणुपरिमाणमपि 'स्व'-संज्ञितत्वम् ॥**

उसके मन में विचार जागा 'हन्त, नारी का सब कुछ संसार में केवल दूसरों के लिए ही समर्पित है, संसार में परमाणु बराबर भी ऐसी वस्तु नहीं, जिसे उसको अपनी वस्तु कहा जा सके ॥ ४ ॥

**प्रणयसरसि वल्लभद्विपेन्द्रादसह्मवाप्य करोपमर्दमेषा ।**
**वहति कमलिनीव विश्लथं स्वं परिगतसौभगमात्मनो हि सर्वम् ॥**

संकेतः—गजकमलिन्युपमया पुरुषं प्रत्यपरक्तताऽत्र व्यज्यते । तेन सीताया लोकतो वैराग्यमुत्प्रेक्ष्यते ॥ ५ ॥

यह [ नारी ] प्रणय के सरोवर में प्रियरूपी गजराज का असह्य करोपमर्द पाती है और सौभाग्य से लिपटा इसका अपना सब कुछ श्लथ विश्लथ ही रहता है ॥ ५ ॥

**अशिथिलचरणं पुरो व्रजन्ती मनुजनुषां ननु चेतनेतिहासे ।**
**प्रणयपरवशे ! पुरन्ध्रि ! सत्यं त्वमिह पराध्यंसमर्पणैकभावा' ॥**

मनुष्यजाति की चेतना के इतिहास में मुस्तैदी के साथ आगे बढ़ी हे प्रणयवश पुरन्ध्रि ( कुटुम्ब संस्था का मेरुदण्ड नारी ) ! सचमुच एकमात्र उत्कृष्टतम समर्पण ही है तेरे हृदय की वास्तविकता' ॥ ६ ॥

**रविकुलमहिषीति दिग्धचेता मनसि बभार विकल्पनाशतानि ।**
**अपि सुरसरितस्तरङ्गमाला भवति जले पवमानजातपीडे ॥**

इन सब भावों से दिग्धचित्त रघुकुल महिषी ( सीता ) का मन इस प्रकार सैकड़ों विकल्पों से भरा आ रहा था। पवन का आघात होने पर गंगा के जल में भी तरंगमाला उठने ही लगती है ॥ ७ ॥

**मुनिजनवनिताभिरार्यधर्मे दृढमतिभिस्तपसि स्थिराभिरेषा ।**
**तनयमिथुनशोभिता पराध्यैरुपकरणैः सदकारि तत्र हर्षात् ॥**

वाल्मीकि के आश्रम में आर्यधर्म में दृढमति, तप में स्थिरतापूर्वक निरत मुनि-वनिताओं ने उत्कृष्ट उपकरणों से खुशी के साथ सीता का सत्कार किया ॥ ८ ॥

**ऋषिजनकृतमङ्गलोपचारामुटजकुटीमुपलभ्य तत्प्रदिष्टाम् ।**
**इति मनसि चकार दिव्यभावा नरपतिसौख्यतृणेषु सा वितृष्णा ॥**

ऋषिजन द्वारा किए मंगलोपचार से युक्त और उन्हीं के द्वारा निर्दिष्ट कुटी पाकर राजसुखरूपी तृण से वितृष्ण दिव्यहृदया सीता के मन में हुआ कि—॥ ९ ॥

**नियतमतितमां भवामि धन्या सुरजनसंस्पृहणीयमाश्रमं या ।**
**कृत-गृह-चरितार्थता प्रसूत्या प्रथमकवेः कृपयास्मि संप्रविष्टा ॥**

सचमुच मैं बहुत ही धन्य हूँ जो पुत्रजन्म से गार्हस्थ्य की चरितार्थता के पश्चात् आदि कवि की कृपा से इस आश्रम में आ पहुँची हूँ जो देवताओं के लिए भी स्पृहणीय है ॥ १० ॥

**कुशलव-जल-सीकरोक्षितानि दधिघृतमिश्रितमिष्ट-पायसानि ।**
**मसृण-कट-पलाल-संस्तराणि शुभशयनानि भवन्ति यद्गृहाणि ॥**

यहाँ जो घर है ये कुश-लवों द्वारा छिड़के जलसीकरों से सिञ्चित हैं, इनमें दही और घी से मिश्रित मीठा दूध सुलभ है और इनमें चिकनी चटाइयाँ और पुआँर के सुखद बिछौने भी हैं ॥ ११ ॥

**शुकमृगशिशुशावकैः परीता शतशतधेनुधना समृद्धसस्या ।**
**विगतविभवविक्रिया च यस्मिन् मुनिजनता क्षितनागरा चकास्ति ॥**

संकेतः—समृद्धा नागरा विक्रियाजुषः इमे पुनर्न तथेति तानिमे क्षयन्तीति व्यतिरेकः। क्षि क्षये भौवादिकः ॥ १२ ॥

इस आश्रम की जनता मुनियों की जनता है। यह नगरवासी जनता से ऊँची है। यह शुक और मृगों के शावकों से घिरी हुई है, इसके पास सैकड़ों की संख्या में गोधन है, इसकी फसल ससृद्ध है ( इस प्रकार इसके पास वैभव है ) परन्तु वैभव का विकार नहीं है ( जो नगर वासियों में रहता है ) ॥ १२ ॥

**मनुजवपुषि भुक्ति-मुक्ति-लक्ष्म्यौ विधृतविभक्तितयापि यत्र युक्ते ।**
**भरतभुवनसंस्कृतौ स्वमर्थं 'प्रतिजनजीवनमुक्ति'-मर्पयेते ॥**

संकेतः—विधृता विभक्तिः विभागो याभ्यां तद्भावेनापि यत्राश्रमे युक्ते अविभक्ते। जीवनमुक्तिशब्दस्य मुख्योऽर्थो भुक्तिमुक्तियोग एवेति नवीनः पन्थाः। प्रतिजनं तत्प्रतिष्ठा चाश्रमस्य विशेषः ॥ १३ ॥

जहाँ, सदा विभक्त ( पृथक् पृथक् ) रहने वाली भुक्ति और मुक्ति मनुष्य जीवन में समन्वित हैं और इसीलिए भारतीय संस्कृति को जहाँ 'प्रत्येक जन को जीवन [और] मुक्ति, यह अपना अर्थ प्राप्त हो रहा है ॥ १३ ॥

**करणमिदमथेदमात्मतत्त्वं, द्वितयमपि प्रतिपूरुषं परस्य ।**
**परमपुरुषसंज्ञकस्य यस्मिन् परमशिवस्य तनूयितं बिभर्त्ति ॥**

संकेतः—करणम् इन्द्रियग्रामः शरीरं च। संसारोऽपि परमशिववपुरेवेति शैवागमिनः ॥ १४ ॥

यह इन्द्रियग्राम और यह आत्मतत्त्व, जहाँ दोनों ही प्रत्येक व्यक्ति में परमपुरुष नामक परमशिव के ही शरीर सिद्ध हो रहे हैं ॥ १४ ॥

**'इदमभिमतमेतदस्ति हेयं' मतिरियमत्र जने जनेऽवदाता ।**
**नरपतिनिरपेक्षमत्र हन्त प्रचलति येन नृरूप एव मेधः ॥**

संकेतः—हेयोपादेयसंवर्गणमेव धर्मः, तत्सहितं यन्नृजीवनं स एव नृरूपो मेधः, न तु नरबलिसंपाद्यो मेधः। नरमेधशब्दस्येयमपूर्वा व्याख्या ॥ १५ ॥

'यह ग्राह्य है और यह त्याज्य' यह विवेक जहाँ प्रत्येक व्यक्ति में उज्ज्वलता के साथ प्रतिष्ठित है। अतः जहाँ राजा की आवश्यकता ही नहीं है और नर-रूपी ही मेध [ नरमेध का नवीन अर्थ ] जहाँ प्रचलित है ॥ १५ ॥

**विशसनमिह पोषणस्वरूपमिह यजनं भजनेन मिश्ररूपम् ।**
**इह भजति महान्ति राष्ट्रलक्ष्मीः स्वयमुपगम्य फलानि शान्तिदानि ।।**

**संकेत**:—विशसनम् छेदः लतादीनाम् । भजनम् सेवनं च राष्ट्रादीनाम् । इह राष्ट्रलक्ष्मीः शान्तिदानि फलानि स्वयमुपगम्य भजत इति लोक—मङ्गलत्वमपि ।। १६ ।।

जहाँ विशसन ( लतादि का छेद आदि ) पोषण रूप ही है, जहाँ यजन भजन से मिश्रित है, इसलिए राष्ट्रलक्ष्मी यहीं स्वयं आती और शान्तप्रद महत्तम फल उपार्जित किया करती है ।। १६ ।।

**इह वसति पुमान् द्विधा विभक्त इह खलु कामयते बहूः प्रजाः सः ।**
**सृतिरिह नियतिं नियम्य सम्यक् प्रसरति मृत्युमपास्य दास्यकेऽपि ।।**

**संकेतः**—स्त्रीपुंसौ हि सिसृक्षोः पुरुषस्य द्वौ भागौ । तेन ईदृशीरेव प्रजाः स्रष्टुमीश्वरः कामयत इति भावः । योगसिद्धिश्चात्र मृत्युजित्त्वम् ।। १७ ।।

दो रूपों में विभक्त वह आदि पुरुष यहीं रहता दिखाई देता है, अनेक प्रकार की प्रजाओं की कामना भी वह यहीं करता है । यहीं सृष्टि नियति का लंघन करती और उत्तरोत्तर आगे बढ़ती जा रही है, जिसके यहाँ मृत्यु के लिए गुलामी का भी अवसर नहीं है ।। १७ ।।

**इदमखिलमपीशवास्यमेव त्यजनशुभैव हि तेन भुक्तिरार्या ।**
**इति नियतिमुपास्य बोधयोगः प्रतिजनमत्र समश्नुते प्रतिष्ठाम् ।।**

**संकेतः**—बोधयोगो ज्ञानयोगः 'ईशावास्यमिदमि'ति श्रुति-प्रतिपाद्यः ।। १८ ।।

यहाँ प्रत्येक व्यक्ति नियति का उपासक है और उस प्रत्येक में यह ज्ञानयोग प्रतिष्ठित है कि 'यह संपूर्ण विश्व ईश से आवासित है, अतः त्यागपूर्वक किया गया भोग ही शुभ है' ।। १८ ।।

**इह सनक-सनातना हि सर्वे मुनिशिशवो गिरिजारमाश्च कन्याः ।**
**शुकभरतभगीरथा युवानो मम पितरः स्थविराश्च हन्त सर्वे ।।**

**संकेतः**—पूर्णब्रह्मचर्यं हि सनकादीनां साधारण्यम्, निष्ठावत्त्वे गिरजारमयोः, शुकस्य परहंसतायां, भरतस्य वीरत्वपरिपालकत्वयोः भगीरथस्य च तपस्वित्वे । सर्वेषां स्वभूमिकासु पूर्णतैवात्र प्रतिपाद्या ।। १९ ।।

यहाँ जितने मुनि बालक हैं वे सब सनक-सनातन ही हैं, जितनी कन्याएँ हैं

वे सब पार्वती और लक्ष्मी हैं, सभी युवक शुक भरत और भगीरथ हैं और सभी वृद्ध मेरे पिता विदेहराज जनक हैं। क्या ही उत्तम स्थिति है यहाँ की ॥ १९ ॥

**इह निवसति भक्तिरष्टमूर्त्तौ रवि-शशि-दीक्षित-पञ्चभूत-मूर्त्तौ ।**
**'कुशल' इति यतश्च यत्र शब्दः प्रतिमुनि हन्त सदान्वितार्थ एव ॥**

**संकेतः**—'रविशशिपञ्चभूतेषु यजमानत्वेन प्रतिष्ठित एव कुशल" इति सूत्रमित उन्नेयम् ॥ २० ॥

यहाँ भक्ति है सूर्य चन्द्र, यजमान और पंचभूत इन आठ मूर्त्तियों से युक्त भगवान् अष्टमूर्त्ति शिव में, अतः यहाँ 'कुशल'-शब्द प्रत्येक मुनि में सदा ही अन्वित रहता है ॥ २० ॥

**अधि-तमसमथाधि-गङ्गमस्मिन्नृषिकुलमस्ति समाधिनाशिताधि ।**
**'क्व नु खलु कविना स्वधाम कार्यमि'ति मतिरत्र हि निश्चितिं प्रयाति ॥**

**संकेतः**—तमसा तमःप्रतीकः, गङ्गा सत्त्वप्रतीकः। एतदन्यतरैकान्तिकेन कविना न भाव्यम् अपितु ईश्वरवद् विश्वमपि कविना सेव्यमिति भावः ॥ २१॥

तमसा [ तमोगुण ] और गङ्गा [ सत्वगुण ] के बीच यहाँ प्रत्येक मुनि ने समाधि साधी है और मनोव्यथाएँ दूर कर रखी हैं। यहीं यह भी समझ में आता है कि कवि को अपना धाम कहाँ बनाना चाहिए' ॥ २१ ॥

**इति हृतहृदया नृपेन्द्रजाया मुनिपदसौभगमञ्जसा निरीक्ष्य ।**
**अधिनगरजनं विपच्यमाने परिवदनेऽप्यकरोत् पुमर्थबुद्धिम् ॥**

इस प्रकार मुनि वाल्मीकि के आश्रम की रमणीयता बारीकी के साथ निहार कर राजपत्नी सीता नगरवासियों के बीच फैले अपने जनापवाद को भी स्पृहणीय पुरुषार्थ माना परिवहनं परिवादः कौलीनम् ॥ २२ ॥

**कतिचन दिवसानथार्यलक्ष्मीर्जनकसुता पृथुकौ लघू अपेक्ष्य ।**
**मुनिजनविनिवारिता श्रमेभ्यः कथमपि कृच्छ्रगतेव सा निनाय ॥**
**तदनु कुशलवेतिसंज्ञया तन्मुनिजन-भूमिसदृक्षया कवीन्द्रात् ।**
**तनय-युगल-मुत्प्रकाश्य सीता धृततरुचीरयुगा मुनित्वमापत् ॥**

बच्चे छोटे थे इसलिए मुनियों के रोकनेसे आर्यो की आर्यलक्ष्मी सीता कुछ दिनों तक तो श्रम से दूर रहीं और वे दिन बड़ी कठिनाई से बिताती रहीं,—॥२३॥

किन्तु उसके पश्चात् अपने पुत्रों को 'कुश' 'लव'-इन आश्रमोचित संज्ञाओं से कवीन्द्र वाल्मीकि के द्वारा प्रख्यापित कराकर सीता ने वृक्षों की त्वचा के चीर धारण किए और वे भी मुनि बन गईं ॥२४॥

**अभिनवजनिपेशलाङ्गयष्टी अपि तनयावपि तौ दृढत्वकान्त्योः ।**
**नरपति-गृह-गर्भ-भर्म-कर्म-द्युमणिमणि - प्रतिमाङ्कावभूताम् ॥**

संकेतः—गर्भभर्माणि हि कौटल्यादिभिः सम्यक् प्रतिपादितानि । द्युमणिमणिः सूर्यकान्तमणिः ॥२५॥

तुरत पैदा होने के कारण उन दोनों बालकों के शरीर उस समय यद्यपि कोमल थे, परन्तु उनके शरीर दृढ़ता तथा कान्ति में राजभवनोचित गर्भपालन कर्म के कारण सूर्यकान्त मणि के समान दिखाई दे रहे थे ॥२५॥

**कविरभजतनैतयोरतोऽणुप्रतिममपि द्विजसंस्कृतौ न खेदम् ।**
**भवति ननु कियान् स्वयंप्रभस्य श्रम इह संस्करणे मणिव्रजस्य ॥**

इसी कारण कविसम्राट् वाल्मीकि को इन बच्चों के द्विजोचित संस्कार संपन्न करने में तनिक भी खेद नहीं हुआ। भला, स्वयंप्रकाशवान् मणिओं के संस्कार कार्य में श्रम ही कितना होता है ॥२६॥

**जनकतनययापि वत्सलान्तःकरणतया सुतवन्मुनेः पदस्य ।**
**तृण-तरु-मृग-पक्षि-धेनु-वत्स-द्विज-तनयेष्वपि मातृभाव आपे ॥**

अन्तःकरण से वत्सल होने के कारण सीताजी में भी वाल्मीकि आश्रम के तृण, तरु, मृग, पक्षी, धेनु, बछड़े और द्विजातीय लोगों के बच्चों पर अपने पुत्रों के समान मातृभाव जागा ॥२७॥

**सितशबलितपृष्ठकान् मृगाणामतिलघुकान् पृथुकान् निजाङ्कशय्याम् ।**
**अनुदिनमधिरोप्य रामजाया किसलयदुग्ध-मधु-स्पृहानकार्षीत् ॥**

सीताजी मृगों के सफेद और चितकबरी पीठवाले अतीव छोटे छौनों को अपनी गोद में सुलातीं और उनमें कोंपल, दूध तथा मधु की स्पृहा जगाती थीं ॥२८॥

**प्रसवविकृतिमत्र मानवीनामिव मुनिधाम्नि गवां मृगाङ्गनानाम् ।**
**इयमतिकरुणा स्वहस्तदत्तैरुपकरणैरुपशान्तिमानिनाय ॥**

आश्रम में मुनिपत्नियों, गायों या हिरनियों में जिस किसी को भी प्रसव होता, अतिकरुण सीता उनमें से प्रत्येक की पीड़ा अपने हाथ से संजोई सामग्री द्वारा दूर करती थीं ॥२९॥

**इयमिह मुनिबालिकाः स्वशिल्पे कुशलकरा असृजन्नितान्तसूक्ष्मे ।**
**ऋषि-कुल-भुवि येन सभ्यताया अपि परमश्चरमो विकास आसीत् ॥**

संकेतः—स्वशिल्पम् नागरीसमुचितं कामशास्त्रादिप्रसिद्धं नृत्यसूचीकर्मादिरूपम् । सभ्यता हि बाह्यजीवनवृत्तिः ॥ ३० ॥

आश्रम की मुनिबालिकाओं के हाथ सीता ने अपने नितान्त सूक्ष्म शिल्पों में कुशल बना दिए, जिससे ऋषिकुल की भूमि में भी सभ्यता का परम और चरम विकास दिखाई देने लगा ॥ ३० ॥

**विपिनभुवि पुरत्वमत्र जज्ञे यदि किल केवलयैव रामपत्न्या ।**
**किमिव पुरपुरन्ध्रयो न कुर्युर्जनपदसीम्नि, रुचिं यदि श्रयेयुः ॥**

संकेतः—'दाराः पुरन्ध्रय' इति धनञ्जयः । जनपदा ग्रामक्षेत्राणि ॥ ३१ ॥

यदि एक अकेली सीता ने ही जंगल को नगर बना दिया तो नगर की महिलाएँ मिलकर गाँवों में क्या क्या नहीं कर सकतीं, यदि रुचि लें ॥ ३१ ॥

**सुभगरुचिषु संयमः क्रमेषु, यमनियमेषु च सौभगं रुचीनाम् ।**
**इयमिह किल शिष्टताऽस्मदीया सहृदयता-सचिव-स्वभाव-सौम्या ॥**

संकेतः—अस्मदीया भारतीया । सहृदयता सचिवो यस्य तेन स्वभावेन सौम्या, न तु रूक्षताविषमा । यमा नियमाश्च योगशास्त्रादौ प्रसिद्धाः ॥ ३२ ॥

भारतवर्ष की शिष्टता क्या है ? यह कि सुरुचि में संयम तथा यमनियमों के संयम में सुरुचि और सबके ऊपर स्वभाव की सहृदयता से पूर्ण सौम्यता ॥ ३२ ॥

**स्वयमपि कलशोर्द्रुमेषु लघ्वीरियमसृजत् सलिलेन संभृतान्ताः ।**
**कथमिव ननु सान्यथा लभेत प्रतिकणमुच्चतमां स्वदेशभक्तिम् ॥**

सीता छोटी छोटी कलशियाँ स्वयं भरतीं और पौधों में छोड़ती थीं । यदि ऐसा न करतीं तो कण कण पर उच्चतम स्वदेशभक्ति उन्हें प्राप्त ही कैसे होती ॥ ३३ ॥

**अभिनवकवितारसेन पूर्वं स्फुटितशिखाँल्लघुभूरुहः सती सा ।**
**अपि किसलयिताँश्च पुष्पिताँश्च व्यधित निजस्वरमाधुरीरसेन ॥**

उस सती ने ( वाल्मीकिजी की ) अभिनवकविता से अंकुरित पौधों को अपनी स्वरमाधुरी ( संगीत ) से किसलयित और पुष्पित भी कर दिया ॥ ३४ ॥

**निजपरिसरतीर्थजातमेषा मुनिसहिता पदयात्रया ददर्श ।**
**अयि बत कथमन्यथा ममत्वं निजभुवि कोऽपि भजेन्न तां स्पृशेच्चेत् ॥**

सीता अपने पास के तीर्थों के दर्शन मुनियों के साथ पदयात्रा द्वारा कर आती। कोई भी व्यक्ति अपनी भूमि के प्रति ममत्व कैसे पा सकता है यदि उसका स्पर्श न करे ॥ ३५ ॥

**किसलयशिशुसोदरेण सीता कलमभुवः परिमृद्नती करेण ।**
**कठिन-कर-कृतां स्वभूमिसेवां कृषकजनस्य सुदूरमत्यशेत ॥**

धान के खेतों को सीता अपने दोनों पुत्रों के साथ स्वयं ही निराती थी और किसानों की कठोर हाथों से की गई स्वभूमिसेवा में वे आगे थीं ॥ ३६ ॥

**तरुण-तरणि-सोदरं वसाना वसनयुगं क्षुमया स्वयं कृतं सा ।**
**अतुषदतितरां महार्ह-राज्ञी-पट-परिधानसुखस्मृतेरभूमिः ॥**

संकेतः—तरुणतरणिः पिङ्गरुचिः । क्षुमा अतसी ।

वे काफी निकल आए सूर्यबिम्ब के रंग के दो वस्त्र अतसी के धागों से स्वयं बनाकर पहनतीं और रानी के वेष के पट और परिधानों के सुख की स्मृति से भी दूर वे उन्हीं से अतीव परितोष का अनुभव करती ॥ ३७ ॥

**स्वयमकृत कटं पटं घटं सा स्वयमसृजल्लघुपुत्तलाँश्च साध्वी ।**
**दिनकर-कुल-वर्धनौ ततस्तौ शिशुवयसावपि कर्मठावकार्षीत् ॥**

चटाई, वस्त्र और बरतन वे स्वयं बना लेतीं, इसी प्रकार खेल खिलौने भी। और इस प्रकार सूर्यवंश की वृद्धि के हेतु उन दोनों पुत्रों को वे बचपन से ही कर्मठ बना रही थीं ॥ ३८ ॥

**तनयवदनशुक्तिदन्तमुक्ता-छविहृतचित्तशुका विदेहजा सा ।**
**विरहदहनशोधितां स्वदेहे सु-कनकपञ्जरतां परामुवाह ॥**

संकेतः—सुकनकं शोभनं पावकपाके निश्यामिकं हेमेत्यर्थः ॥ ३९ ॥

कभी कभी सीता में कोमलता जागती। तब उनका चित्तरूपी शुक बच्चों की मुखरूपी शुक्तिका में दीख पड़ते दांतरूपी मोतियों पर आकृष्ट हो जाता और उस समय उनका शरीर विरहाग्निमें तपता सुवर्णपञ्जर बन जाया करता ॥ ३९ ॥

सुतयुगतनुकान्तिरूपसाम्यादतिशयभर्तृगतान्तरापि सैषा ।
प्रतिदिननिजकृत्यनित्यलग्ना लघु तु कदाचन सालसेक्ष्यतां नु ॥

दोनों बच्चों के शरीर की आकृति और कान्ति राम से मिलती थीं। अतः सीता का चित्त उन्हें देख अपने पति के स्मरण में डूब जाता था, किन्तु इतना होने पर भी अपने दैनिक कृत्य में सदा तत्पर रही आती थीं और मजाल कि कभी अलसाई दिखाई दें ॥४०॥

हृदयमधित सर्वभूतमूर्त्तौ भगवति रामपदाभिधानसौम्ये ।
वपुरथ वनदेवतेव सौम्या धरणिसुता धरणौ श्रमारणौ च ॥

संकेत—हृदयेन रामं स्मरन्ती वपुषा कृषिकर्म चक्रे इति भावः ॥४१॥

सीता का हृदय तो निहित था सर्वभूतरूप भगवान् में जिन्हें 'राम' नाम से पुकारा जाता है, और शरीर था भूमि में और परिश्रम की अरणि के मन्थन में, वन-देवियों के ही समान ॥४१॥

हिमगिरिगुरुशृङ्गतः पयोधेर्गहनतमावट-गह्वराणि यावत् ।
निखिलमपि विदेहजा स्वराष्ट्रं मृदु शुचि तल्पममंस्त भूशयाना ॥

सीता भूमि पर ही सोती थीं और उस समय हिमगिरि के सर्वोच्च शिखर से लेकर समुद्र की गंभीरतम खाड़ियों तक की, अपनी संपूर्ण भारतभूमि के संपूर्ण वक्ष को अपना परम सुकुमार तल्प मानती थीं ॥४२॥

प्रणिहितिहितमानसा समाधिं पितृगृहशिक्षितमत्र साधयन्ती ।
प्रशमित-परितापमात्मरूपं प्रियतममैक्षत सा सदा विरात्रे ॥

संकेतः—विरात्रे रात्रेरवसाने। सा ह्येव प्रबोधवेला प्रतीकस्तमोहानेः ॥४३॥

पिताजी के घर सीखी समाधि को सीता यहाँ साधती थीं चित्त को प्रणिहित कर। और वे रात्रि के प्रत्येक अवसान ( प्रभात ) में समस्त परितापों से दूर आत्म-रूपी प्रियतम का दर्शन किया करती थीं ॥४३॥

वृषरवि-शिशिरेन्दु-तापशीतं घन-पवमान-शरत्कुशेशयाम्भः ।
निरतिशयविशुद्ध[illegible]डिचक्रा जनकसुता सुखमत्युवाह सर्वम् ॥

संकेत—वृषराशिस्थो रविः वृषरविः ज्येष्ठसूर्यः, शिशिरस्य ऋतोरिन्दुः सर्वाधिकं शीतः, तयोः तापशीतं तापशैत्यद्वन्द्वम् ॥४४॥

जेठ के सूर्य की तपन और माघ के चन्द्र की ठंड, बरसाती बयार और शरत्कालीन कमलमण्डित जल इन सबको सीता, सुख से सह लेती थीं। उनका नाडीचक्र योगविद्या से नितान्त परिशुद्ध जो था ॥४४॥

**निजवपुषि निजप्रभुत्वमेषाऽऽसननियमादिभिरार्यदेशजाता।**
**कथमिव न दधातु, संस्कृतिःस्वा भवति हि किं कथमप्युदस्तवृत्तिः॥**

**संकेत**—निजप्रभुत्वं न च मृत्युप्रभुत्वम्। संस्कृतिः संस्कारः। बाल्यात् प्रभृति योगविद्याया अभ्यास इति भावः ॥४५॥

आर्यदेश की यह बालिका आसन और नियम आदि के द्वारा अपने शरीर पर अपना ही स्वामित्व रखती थी (गो-स्वामी थी)। क्यों न हो ऐसा, क्या अपनी संस्कृति व्यक्ति से कभी भी हट पाती है॥ ४५॥

**सुत-वपुषि ततः स्वदुग्धराशेरियमतनोदिव कामधुग् यथैव।**
**अमृतमयदृतित्वमात्मशुद्धिर्भवति हि मातृजनस्य राष्ट्रपुष्टचै॥**

**संकेतः**—दृतिः कुतूः। ततः नाडीचक्रपरिशोधनात् स्वप्रभुत्वाच्च ॥ ४६॥

माता सीता ने अपने बच्चों के शरीर को दुग्धराशि से भर कर अमृतपूर्ण मषक बना दिया था, कामधेनु के ही समान। माताओं की शरीरशुद्धि संपूर्ण राष्ट्र का पोषण किया करती है ( गौ भी माता है)॥ ४६॥

**रविधरणिसुताऽऽत्मजात-युग्मं प्रतिनिदधाविव रोदसीत्रिलोक्याः।**
**निरतिशय-महः-सहिष्णुभाव-द्वय-महितं जनुषः प्रभृत्यदोऽभूत्॥**

**संकेतः**—सुतश्च सुता चेत्येकशेषेण सुतौ रामसीते तयोरात्मजातत्वात् तादृशं महः प्रतापमूलमोजः सहिष्णुभावः सहिष्णुता च। रोदसी त्रिलोकी हि सूर्यलोक-पृथिवीलोकाभ्यां निर्मीयते। तत एव सूर्यपृथिव्योर्नसारी तत्प्रतिनिधि॥ ४७॥

सूर्य और पृथिवी के बच्चों (राम और सीता) की आत्मा से उत्पन्न वे दोनों बालक जन्मकाल से मानों रोदसी-त्रिलोकी का प्रतिनिधित्व प्राप्त किए हुए थे, उनमें निरतिशय तेज (सूर्य का गुण) और निरतिशय सहिष्णुता (पृथिवी का गुण) दोनों ही गुण जन्म से ही जो विद्यमान थे॥ ४७॥

**स्व-सुत-महिमनि प्रदिष्टचित्ता जनकसुताप्यथ सा समग्ररूपे।**
**विकसति कुसुमव्रजे नु कल्पव्रततिरुवाह सदावधानशुद्धिम्॥**

सीता भी अपने बच्चों के उपर्युक्त गुणों पर पूरा ध्यान दे रही थीं, विकसित होते पुष्पों पर कल्पलता के समान ॥ ४८ ॥

**भवतु विभवविस्तरो महीयान् ननु, यदि वास्तु वनेचरत्वमुग्रम् ।**
**भवति बुधजनो न हि स्वदेशाङ्कुर इव बालजने कदाप्युदस्तः ॥**

पर्याप्त वैभव हो या वन में भटकने का अवसर, विज्ञजन बच्चों को अपने देश का अंकुर समझते और उनके प्रति कभी भी उदासीन नहीं होते ॥ ४९ ॥

**प्रभवति न हि सौरभं न वन्ये सरसिजनौ, न च मिष्टता फले नो ।**
**नियतिमनुकरोति भावजाते जनकगुणान्न तु देशसंविभागात् ॥**

**संकेतः**—वन्यत्वं फलेऽपि योज्यम् । भावः पदार्थः ॥ ५० ॥

ऐसा नहीं कि वन में उत्पन्न कमल में सुगन्ध या फल में मिठास नहीं होती । नियति कारणसामग्री पर निर्भर रहती है, देश भेद पर नहीं ॥ ५० ॥

**निमि-रवि-कुल-लज्जयेति हर्षात् सुतयुगली विपिनेऽपि रक्तयेव ।**
**प्रतिनव-परिकर्म-संविधाभिः प्रतिदिनमङ्गसमृद्धिमाप्यते स्म ॥**

**संकेतः**—निमिरविकुललज्जापदेन सीता विवक्षिता ॥ ५१ ॥

इस कारण निमिवंश और सूर्यवंश की लज्जा उस सीता ने अपने दोनों बच्चों के शरीर वन में भी पूर्ण ममतापूर्ण सी रहकर रोज रोज के नए स्नानादि संस्कारों से परिपुष्ट किए ॥ ५१ ॥

**प्रतिदिनमभिवृद्धिमश्नुवाना विरतिमिव स्वमतिः सुतद्वयी सा ।**
**जनकदुहितुरन्तरात्मतत्त्वं प्रथमकवेरिव तोषयांबभूवे ॥**

**संकेतः**—स्वमतिः सीतामतिः । प्रथमकवेरन्तरात्मतत्त्वमिव जनकदुहितुरन्तरात्मतत्त्वमिति योजना । तदत्रोपमेयमिवोपमानमपि प्राकरणिकमेव ॥ ५२ ॥

सीता की अन्तरात्मा में वाल्मीकि की ही अन्तरात्मा के समान प्रतिदिन वृद्धि को प्राप्त होती बच्चों की वह जोड़ी उसी प्रकार संतोष उत्पन्न कर रही थी जिसप्रकार विरति को प्राप्त हो रही उन्हीं की बुद्धि ॥ ५२ ॥

**अवयवपरिवृद्धिरात्मजन्मद्वितय उवाह गुणाभिवृद्धिलक्ष्मीम् ।**
**इति जनकसुता बभूव तुष्टा, भवति न पिण्डविवृद्धिरेव वृद्धिः ॥**

अपने दोनों बच्चों के अंगों में हो रही वृद्धि गुणाभिवृद्धि की शोभा को भी धारण किए हुए थो, इसलिए सीता और अधिक संतुष्ट थी । केवल पिण्ड की वृद्धि ही वृद्धि नहीं होती ॥ ५३ ॥

**प्रणतिपरतया तयात्मजातावृषिचरणाम्बुरुहे मरालितौ च ।**
**भरतभुवन-भारती-प्रयाग-स्नपनविधौ कृतिनौ विनिर्मितौ च ॥**

**संकेतः**—मरालितौ मरालतां प्रापितौ । भरत भुवनं भारतम् ॥ ५४ ॥

सीता दोनों बच्चों को प्रणाम करने की शिक्षा देतीं और तदर्थ भगवान् वाल्मीकि के चरणरूपी कमलों में उन्हें हंस बना देतीं । ऐसा कर सीता ने उन्हें भारतीय भारतीरूपी प्रयागराज के स्नान में कुशल बना दिया ॥ ५४ ॥

**स्व-शरण-भुवि गोमयेन साध्व्या मकरततां, सुतयोर्द्वयो, गतायाम् ।**
**स्खलित-पदतया सहस्रशः सा वपुषि बभार शिवां स्वदेशमृत्स्नाम् ॥**

**संकेतः**—शरणं कुटीरम् 'शरणं गृहरक्षित्रो'-रितिवचनात् ॥ ५५ ॥

वे दोनों बच्चे साध्वी सीता द्वारा अपनी कुटिया के गोमय से लिप्त, और इसीलिए मरकतमणि द्वारा रचित से आँगन में हजार बार फिसलते और हजार बार अपने शरीर पर अपने देश की मिट्टी धारण करते थे ॥ ५५ ॥

**निज-करनवनीत-जानु-याता सुतयुगली मुनिधाम संस्पृशन्ती ।**
**अतनुत गतनिद्ररोमलक्ष्मीमिव नवसस्यमिषेण तां स्वभूमिम् ॥**

अपने नवनीत जैसे हाथ और घुटनों के बल चलती बच्चों की वह जोड़ी जब मुनि के आश्रम का स्पर्श करती तो उस भूमि को भी रोमाञ्च होने लगता, नए सस्य के बहाने ॥ ५६ ॥

**विलुलित-शितिकाकपक्षलक्ष्मीर्मुनिजन - यज्ञविभूति - कान्त- भाला ।**
**अरुणरुचि च वल्कलं वसाना सुतयुगली गुहयुग्मतां वितेने ॥**

**संकेतः**—शितिः कृष्णवर्णः । गुहः स्वयमेक एव इमौ तु द्वाविति गुहस्य द्वित्व-मुत्प्रेक्षितम् ॥ ५७ ॥

बच्चों की वह जोड़ी ऐसी लग रही थी जैसे दो कार्त्तिकेयों की जोड़ी हो । उनके सिर पर काले केश लहराते, भाल मुनियों के यज्ञ के भस्म से उद्भासित होता और शरीर पर होता अरुणवर्ण का वल्कल ॥ ५७ ॥

**नियमकृशवपुर्विदेहपुत्री धृतिसुभगेन परिश्रमेण पुत्रौ ।**
**अपुषदपि च बाललालनं वै प्रथमतरं तप आर्यतापसेषु ॥**

**संकेतः**—अपुषद् अपोषयत्, दैवादिकस्य पुष्यतेः लुङि रूपम् ॥ ५८ ॥

व्रतनियमों से कृशकाय होने पर भी सीता धैर्ययुक्त परिश्रम से उन दोनों

बच्चों को पाल रही थी। क्या आर्यजाति के तपस्वियों में बच्चों का पालन प्रथम और सर्वप्रधान तप नहीं हुआ करता ? ॥५८॥

**हृदय उदयमाप रामपत्न्या अतितरवत्सलता तथा व्यथापि।**
**पतिहृदि निजवत्समाप्य नारी भवति हि तृप्ततमा स्वमातृभावे ॥**

राम की पत्नी सीता के मन में एक ओर अतीव वत्सलता उमड़ती और एक ओर अतीव व्यथा भी। नारी अपने बच्चे को अपने पति की गोद में देखकर ही अपने मातृभाव को चरितार्थ मनाती है ॥५९॥

**परमियमतिमात्रदान्तभावा विकृतिमिमां क्षणमर्धमेव भेजे।**
**वशिषु न हि विकारजातमम्भःस्वनल इव श्रयते प्रकाममायुः ॥**

किन्तु सीता का हृदय अत्यन्त दान्त था, अतः वे इस व्यथा को आधे क्षण से अधिक नहीं रहने देती थी। वशी जनों में विकार पानी में आग की नाई दीर्घायु नहीं हो पाता ॥६०॥

अथ कुलकम्

**क्व नु खलु पृथिवीपतित्वमस्याः क्व नु बत पुत्रकयोर्वनित्वमेतत्।**
**सृजति विधिरहो विपाकमुग्रं विषमतमं च समस्त एव जन्तौ ॥**

'कहाँ तो यह साध्वी ठहरी रानी और कहाँ इन बच्चों का इस प्रकार वन में पलना। अहो! विधाता किसी पर भी अपनी करनी किए बिना नहीं चूकता ॥६१॥

**इयमिह शुच एव हन्त वार्ता मनुसदृशैरपि राजभिर्धृतापि।**
**नगर-जनपद-प्रजा विकास-मधिभरतावनि सर्वथा न लेभे ॥**

यह एक दुःख की बात है कि मनु जैसे राजाओं द्वारा पालित होने पर भी गाँव और नगर की जनता भारतवर्ष में अभी तक पूर्ण रूप से विकसित नहीं हो पाई ॥६२॥

**ध्रुवमिह, यदिवा, परान्, नराणां वपुषि विधि-र्धृतजन्मनः करोति।**
**इह हि तदनु सर्वदैव तेषां शुभगतये प्रहिणोति च स्व-वप्रम् ॥**

संकेतः—परान् नरेतरान्। वप्रम्, पितरम्, "वप्रः पितरि केदारे वप्रः प्राकार-रोधसोरि"ति धरणिरिति भरतसेनो मेघदूत [ ३-पद्य ]-सुबोधायाम्। आक्रोशे नास्य ग्राम्यत्वम् ॥६३॥

अथवा निश्चित ही विधाता इस देश में मनुष्य के शरीर में किन्हीं अन्य तत्त्वों को ही भेजता है, क्योंकि उसके बाद वह यहीं अपने बाप को भी भेजा करता है, इन प्राणियों की सद्गति के लिए ॥६३॥

**भवति तत इहैव मोक्षलक्ष्मीपतिरपि हन्त सनातनाभिधोऽध्वा ।**
**प्लववपुरयमात्मनि स्थिताँस्तान् गमयति संसरणाम्बुधेः परस्तात् ॥**

संकेतः—सनातनधर्मो हि मोक्षलक्ष्मीपतिः । आत्मनि निजे ॥६४॥

यहीं है मोक्ष तथा लक्ष्मी दोनों का पति सनातन नामक मार्ग नौका बन-कर उन प्राणियों को संसृतिरूपी समुद्र से पार करता रहता है ॥६४॥

**भरतभुवनमस्ति तीर्थमार्यं ननु सततं हि चराचरोद्दिधीर्षु ।**
**विविधमतिरतो विभिन्नभाषो विषमगतिश्च जनोऽत्र दृष्टिमेति ॥**

इसलिए भारतवर्ष संसार भर के उद्धार का इच्छुक एक तीर्थ है । इसीलिए तो यहाँ विभिन्न मत, विभिन्न भाषा और भाँति भाँति के आचरण वाली जनता विकसित हुआ करती है ॥६५॥

**इति मुनिजनता सुतद्वयीं तामथ च सतीमपि तां वने निरीक्ष्य ।**
**हृदयमतिममत्वतोऽतिभूमिं गमयति हन्त विकल्पसंहतेः स्म ॥**

उस आश्रम के मुनिजन इन बच्चों और उस सती को देखते तो हृदय को कल्पनाओं में बहुत दूर पहुँचा देते थे ॥६६॥

**परमियमुपलं विनाशहेतुमपि मसृणं सृजतेङ्गुदीफलेन ।**
**अधिगतविनया विधित्सुरासीज्जगदखिलं निजसिद्धि-सिक्तमेव ॥**

ऐसा विचार मुनिजन तो करते थे परन्तु सीता ने अपने विनाशक पत्थर को भी स्निग्ध करते इंगुदीफल से शिक्षा ली थी और वे अपनी सिद्धि से समस्त संसार को सिक्त करना चाहती थीं ॥६७॥

**दशति दृढमपि स्तनं स्ववत्से विचलति वत्सलभावतो न धेनुः ।**
**अपि शकलयति स्वपत्रशाखमवनिरुहो न खगे विरुद्धवृत्तिः ॥**

थन में दाँत गड़ा देने पर भी बछड़े पर गाय वात्सल्य करना नहीं छोड़ती, और पत्ते तथा शाखाएँ कुतरने पर भी पक्षियों को वृक्ष भगाते नहीं ॥६८॥

**असति सति, लघौ पृथौ च वृत्तिर्न विषमतामिह भारते प्रयाति ।**
**सति सति सति, यद्, विरुद्धवृत्तिः सरिति शिलेव शिवत्वमेति कश्चित् ॥**

संकेतः—सति सत्पुरुषे सति सत्त्वनिष्ठे सति विद्यमाने । यद् येन हेतुना विरुद्धवृत्तिर्जनः । सरित् सलिलमयी, शिला च पाषाणवपुः एवं सापि सरितो

विरुद्धवृत्तिरेव। यथा च सरित्तामत्यजन्त्यां शिलापि शिवपिण्डतामेति तथैव प्रकृते ॥६९॥

असत् हो या सत् और छोटा हो या बड़ा, भारत में किसी के भी साथ व्यवहार में विषमता नहीं अपनाई जाती, क्योंकि यदि सत् सत् ही रहा आए तो विरोधी व्यक्ति भी कभी न कभी शिवभाव में परिणत हो जाता है, नदी में शिला की भाँति ॥६९॥

**रघुपतिदयितापि तेन काश्चिच्छरद उदस्य विषादमात्मजातौ।**
**निजभुवनविकासनेच्छुरेषा विधिवदपुष्यदतिप्रशान्तचेताः ॥**

**संकेतः**—आत्मजातौ कुशलवावपुष्यत् दैवादिकस्य पुष्यतेर्लुङ् ॥७०॥

इसलिए भगवान् राम क प्रिया सीता भी कुछ वर्षों तक हृदय का विषाद दूर कर, अपने राष्ट्र के विकास की इच्छा से अपने बच्चों को अतीव शान्त चित्त से पालती रहीं ॥७०॥

**तदनु च विशदात्मा सात्मनो ज्योतिषा, स्वं**
**तनयमिथुनमेतद् बोधवह्नौ विशोध्य।**
**पुरुष-फल-चतुष्के जागरूकौ विधातुं**
**निरचिनुत गुरुत्वे दृष्टवेदं कविं तम् ॥**

**संकेतः**—स्वयमेव दत्तशिक्षाविमौ। ततस्तयोः पुरुषार्थनिश्चयार्थमेव सा सीता तदुपयुक्तस्य गुरोर्निर्वाचनमकरोत् ॥७१॥

और उसके पश्चात् अपनी आत्मज्योति से पवित्र उस ( सीता ) ने अपने इन दोनों पुत्रों का भी ज्ञानाग्नि से शोधन किया तथा पुरुषार्थ-चतुष्टय के चौक में जागरूक बनाने हेतु उनके लिए श्रुतियों के द्रष्टा उस कवि [ वाल्मीकि ] को गुरु चुना ॥७१॥

इति सनातनोपाह्व-श्रीमद्-रेवाप्रसादद्विवेदि-कृतौ 'सीताचरित'-
नाम्नि सर्गबन्धे जानकीमुनिवृत्तिर्नाम
षष्ठः सर्गः ॥६॥

# सप्तमः सर्गः

**अथ धृत-चतुरस्रवेद-पीठं कविमुपनीय सुतौ विदेहजा तौ ।**
**शरवणभवतेजसौ सुयोगे विहितनतिर्विनिवेदयाम्बभूवे ॥**

संकेतः—सुतौ कविं कवेर्वाल्मीकेः पार्श्वमुपनीयेत्यन्वयः शरवणभवः कार्त्तिकेयः। सुयोगे शोभने योगे ॥१॥

तदनन्तर सीता ने कार्त्तिकेय जैसे तेजस्वी दोनों पुत्रों को चारों वेदों की चतुरस्त्र [ विशद और चौकोन ] पीठिका पर आसीन उस कवि [ वाल्मीकि ] के पास शुभ मुहूर्त्त में पहुँचाया और प्रणाम कर निवेदन किया ॥१॥ [ यही हुआ उपनयन ] ॥

**नियतमिह चराचरे प्रपञ्चे नयनगतश्च परोक्षतां श्रितश्च ।**
**न खलु जगति कश्चनापि भावो भवति कवेर्विसिनोति यं न दृष्टिः ॥**

संसार में जो यह चराचरात्मक प्रपञ्च है इसमें निश्चित ही प्रत्यक्ष या परोक्ष कोई भी पदार्थ ऐसा नहीं है जिसका प्रत्यक्ष कविदृष्टि न करे ॥ २ ॥

**ऋषि-मुनि-कवि-ता-त्रिवेणिरार्या प्रवहति मानसनाम्नि वः प्रयागे ।**
**प्रभवति खलु विश्वदैवते वो हृदयमिदं ननु कार्मणे विधाने ॥**

संकेतः—भाववचनस्य तलो द्वन्द्वात् परत्वात् त्रितयेनापि ऋषिप्रभृतिनाऽभिसंबन्धः । विश्वदैवतं विश्वमेव देवता यत्र तादृशं कार्मणं वशीकरणम् ॥३॥

आपके हृदयरूपी प्रयाग में ऋषिता, मुनिता और कविता की आर्य त्रिवेणी सतत प्रवहमान रहती है, और इसीलिए आपका यह हृदय विश्वरूपी देवता के वशीकरण के कठिन अनुष्ठान में समर्थ है ॥३॥

**शिशुहृदि शयिता च येन विद्याज्वलनशिखा स्पृशतीव वैश्वरूप्यम् ।**
**शिवतममिदमस्ति कारणं सत्कुलपति-पावनशारदाऽनुभावः ॥**

संकेतः—एतद्धि विश्वविद्यालयस्वरूपम् ॥४॥

भगवन् ? शिशुओं के हृदय में प्रसुप्त जो विद्यारूपी अग्निशिखा है वह जिससे विश्वरूप प्राप्त करती है वह अतीव शिव कारण है अच्छे कुलपति की पवित्र विद्या का प्रभाव ॥४॥ [ यही है विश्वविद्यालय का अर्थ ]

**पितरमिव भवन्तमाश्रिताहं भरतमहीलघुलेष्टुकाविमौ द्वौ ।**
**निज-निजजनता-परिष्क्रियार्थं चरणयुगे भवतो निवेदयामि ॥**

**संकेतः**—भरतमही भारतं वर्षम् । निजस्य पुत्रयोः स्वव्यक्तित्वस्य, निजजनतायाः पुत्रयोरेव या जनता तयोः परिष्क्रियाया इत्यर्थः ॥५॥

पिताजी के समान आपके आश्रित रह रही मैं भारतभूमि के इन दो नन्हें से कंकरों को आपके चरणों में अर्पित करती हूँ इनके स्वयं के और स्वयं की जनता के परिष्कार के लिए ॥५॥

**ऋषि-मुनि-जनसंसदि प्रसादि प्रमति च हारि च तद्वचो निशम्य ।**
**कविरभवदसौ समाहितात्मा क्षणमथ वाचमिमामुवाच गुर्वीम् ॥**

**संकेतः**—तस्यास्तच्च वचस्तद्वचः ॥६॥

ऋषिजन और मुनिजन की संसद् में सीता के उस प्रासादिक, बुद्धिमत्तापूर्ण और आकर्षक वचन को सुनकर कवि ( वाल्मीकि ) क्षण भर के लिए समाहित हो गए और उसके पश्चात् अतीव सारगर्भित यह वाणी बोले ॥६॥

**दुहित इह पुमान् स जातमात्रो भवति महान् स्वत एव, यः सतीनाम् ।**
**प्रभवति शिवकुक्षितो महार्हो मणिरिह रत्नसुवो भुवः प्रसूतः ॥**

**संकेतः**—जातमात्र एवेति विवक्षा । जातमात्र एव स पुमान् महान् भवति य इत्यन्वयः ॥७॥

बेटी, संसार में वह पुरुष जनमते ही महान् हो जाता है जो सती माताओं की कल्याणी कुक्षि से पैदा होता है । मणि महार्ह (बहुमूल्य) इसीलिए तो होता है कि वह रत्नप्रसू भूमि से पैदा होता है ॥७॥

**रविकुलमहिषी विदेहपुत्री भरतमहीमुनिशोणितोद्भवा च ।**
**त्वमिव जगति हन्त यस्य माता गुरुरपरः क इवास्य शिक्षणे स्यात् ॥**

इस संसार में रविकुल की राजरानी, विदेह की पुत्री और भारतवर्ष के मुनियों के रक्त से बनी तुम जैसी हो जिसकी माता, उसकी शिक्षा के लिए दूसरे किस गुरु की अपेक्षा हो सकती है ॥८॥

**गुरुरपि खलु पुण्यभाक् स भूम्ना शिशव इमे ननु यत्कुले विनेयाः ।**
**अनल इह महान्, स मन्त्रपूतं वहति यतो हविरोषधीमहिष्ठम् ॥**

**संकेतः**—औषधीमहिष्ठम् मन्त्रपूतं हविर्वहतीन्वः ॥

अथवा वह गुरु भी बड़ा ही पुण्यात्मा होगा जिसके आश्रममें ऐसे शिशु शिक्षाके लिए आवें। संसार में अग्नि महान् क्यों होता है, इसीलिए कि वह मन्त्रपूत और औषधियों से गरिष्ठ हविष्य का वहन करता है ॥९॥

**भगवति ! विदिताखिलो मनुष्यो भवति निसर्गत एव जन्मशुद्धया।**
**न खलु बहिरुपाधिमाश्रयन्ते खनिजनुषो मणयः प्रकाशसिद्धचै ॥**

**संकेतः**—जन्मशुद्धिर्हि ज्ञानलाभे भारतीयो मन्त्रः ॥१०॥

भगवति सीते ! जिसका जन्म [ गर्भाधान से प्रसव तक ] शुद्ध होता है वह मनुष्य स्वभाव से ही सर्वविद् होता है। प्रकाश के लिए आकरोद्भव मणि किसी बाह्य उपाधि की अपेक्षा नहीं रखतीं ॥१०॥

**अतिमहति सुजन्मनि स्वयं हि श्रुतिनिधयोऽप्युपचिन्वते वपूंषि।**
**शितमहसि कुतो नु रश्मिजालं प्रभवति, हन्त कुतश्च शीतरश्मौ ॥**

**संकेतः**—शितं तीक्ष्णं महः प्रकाशो यस्य स सूर्यः ॥११॥

जिसका जन्म शुद्ध होता है वह अतिमहान् होता है। उसमें सभी श्रुतियाँ परिपीष को प्राप्त होती हैं। सूर्य में किरणें अपने आप क्यों प्रस्फुटित होती हैं, और क्यों प्रस्फुटित होती हैं वे चन्द्र में अपने आप ॥११॥

**भगवति ! भुवनान्तरालमेतन्निखिलमपि ज्वलितेऽनले यथार्चिः।**
**प्रकृतिपुरुषयज्ञसंविधानात् स्वयमुपतिष्ठति मानुषे निकाये ॥**

**संकेतः**—प्रकृतिपुरुषौ भूतयजमानौ बहिः, चैतन्यशरीरे चात्मनि संबद्धावेव भासेते। तयोः संबन्ध एवायं यज्ञः। निकायः शरीरम् ॥१२॥

भगवति सीते ! प्रकृति और पुरुष का जो यह यज्ञसंविधान है इसके कारण यह पूरा का पूरा विश्व, मनुष्यशरीर में उसी प्रकार उपस्थिति रहता है जिस प्रकार ज्वलित अग्नि में अर्चि ॥१२॥

**रघुपतिदयिते ! विदेहपुत्रि ! द्विजललने ! शृणु भारतप्रतिष्ठे !।**
**क्वचिदपि, पुरतश्च कस्यचिद् वा नमयति शीर्षमतो न भारतीयः ॥**

इसलिए, रघुपतिदयिते, विदेहपुत्रि, द्विजललने और भारतप्रतिष्ठे सीते, सुनो, भारतीय व्यक्ति कहीं भी और किसी के भी सामने अपना सिर नहीं झुकाता ॥१३॥

**जननसमयतः स कल्पनानां तरुषु भवानि समश्नुते फलानि।**
**अथ सुपरमचिन्तनामणीभिर्भवति च तस्य विनोद-देवनानि ॥**

**पिबति तदनु सोऽयमार्यबालो मधुरसमुच्छ्रिति-कामनागवीनाम् ।**
**मनसि वपुषि चायुषि त्रिलोक्यां व्रजति परात्परतां च दिव्यदिव्याम् ॥**

**संकेतः**—कल्पनानां शिवतमसंकल्पानां तरुषु, राहोः शिर इवाभेदे षष्ठी, सुपरमपदमांग्लभाषायाः सुप्रीम—पदेन निष्काश्यम् । तादृशानि चिन्तनान्येन मण्यश्चिन्तामणयः । ईकारान्तोपि मणिशब्दो लभ्यते । उच्छ्रितिः समुच्छ्रय उदात्ततारूपः तस्याः कामनैव गौः कामधेनुः ॥१४-१५॥

वह तो जन्मकाल से ही कल्पनाओं के कल्पवृक्षों में लगे फल खाता है और उसके क्रीडाकौतुक होते हैं सुपरम ( Supreme ) चिन्तन की चिन्तामणियों ( की गोलियों ) से । उसके पश्चात् यह आर्यबालक दूध पीता है उत्कर्ष की कामना रूपी उत्कृष्ट कामधेनु का । और मन, शरीर तथा आयुष्य में वह तीनों लोकों में दिव्यता और परात्परता प्राप्त कर लेता है ॥१४-१५॥

**भरतमनलमात्मसाद् विधाय प्रतिकलमभ्युदयैषिणो द्विजेन्द्राः ।**
**अधिशुचि दृढशाद्वलप्रतिष्ठा भुवनमिदं स्थगयन्ति यागयोगैः ॥**

**संकेतः**—भरताख्योनलो वेदेषु प्रसिद्धः । यागो रासायनिकं मिश्रणम्, योगश्च संयोगः । यज्ञा योगाश्चेति समुदारौ शब्दौ ॥१६॥

( भारतवर्षको भारत नाम देने वाली ) भरत नामक अग्नि को आत्मसात् कर प्रतिक्षण अभ्युदय की इच्छा रखने वाले उत्तम द्विज, ग्रीष्म में भी दृढ़ रहने वाले दूर्वादल से सुप्रतिष्ठ रहते और याग तथा योगों से इस सम्पूर्ण विश्वको भरते रहते हैं ॥१६॥

**कलुषरहितमात्मतत्त्वमार्यो रविकिरणेष्वनुसंदधाति सोऽयम् ।**
**अविरलविशदं तथैव चेतोऽप्यमृतगभस्ति-गभस्तिषु प्रबुद्धः ॥**

**संकेतः**—कलुषरहितमात्मतत्त्वमात्मनः कालुष्यराहित्यम् एवमेव चेतसोऽ-विरल-विशदत्वम् । अमृतगभस्तिः शशी ॥१७॥

यह आर्य, निष्कलुष ( विशुद्ध ) आत्मतत्त्व का अनुसन्धान करता है सूर्य की किरणों में ( याज्ञवल्क्य के समान ) और सदा प्रबुद्ध यह सदा विशद रहने वाले चित्त का अनुसन्धान करता है अमृतरश्मि ( चन्द्र ) की रश्मियों में ॥१७॥

**इदमिदमिदमस्ति नेदमित्थं स्वयमुपबुद्ध विशुद्धबुद्धिरेषः ।**
**अरुचिररुचिरे समानभावास्वनलशिखास्वनुवीक्षते विवेकम् ॥**

विशुद्ध बुद्धि इसमें स्वयं जागती है और 'यह यह है' 'यह यह नहीं' इस प्रकार विवेक के दर्शन यह अरुचिर तथा रुचिर दोनों में समान रहने वाली अग्नि-शिलाओं में कर लिया करता है ॥१८॥ अनुवीक्षते आनुवीक्षिकीं तनुते ॥१८॥

**जगदिदमखिलं महाविराटद्रढिम-परीगत-दंष्ट्रिकाऽग्रलग्नम् ।**
**नियतमनृतमेव नास्ति सत्यमिति च कुहूं ब्रुवतीमसौ शृणोति ॥**

संकेतः—महाविराटस्य द्रढिम्ना परीगताया द्रंष्ट्रिकाया अग्रभागे लग्नं परिणामि ॥१९॥

अमावस्या को, यह आर्य बालक 'यह संपूर्ण विश्व महाविराट की दृढ दंष्ट्रा की नोंक पर झूल रहा है। यह निश्चित ही झूठा है। सत्य कथमपि नहीं'—इस दर्शन का उपदेश करती सुनता है ॥१९॥

**अधिदिवसमथाधिरात्रि सन्ध्यास्वपि च पिनद्धमहोपदेशमाल्यः ।**
**प्रकृतिमहति वर्त्मनि श्रुतीनां भवति महापथिकः स्वयं द्विजेन्द्रः ॥**

इस प्रकार दिन में, रात में और इन दोनों की सन्ध्या में, उक्त उपदेशों की माला पहनते रहने का अभ्यासी द्विजेन्द्र श्रुतियों के प्रकृतिमहान् पथ पर ( बिना किसी के निर्देश के ) स्वयं ही यात्रा करता चलता है ॥२०॥

**पुनरपि निगदामि तेन नासौ क्वचिदपि मस्तकमात्मनोनमार्यः ।**
**विनयपरिगतोऽपि शिक्षणाय श्लथयति कुत्रचनापि भारतीयः ॥**

इसलिए पुनः कहता हूँ कि यह भारतीय आर्य विनीत होते हुए भी अपना मस्तक कहीं भी, कम से कम शिक्षा के लिए, नहीं झुकाता ॥२१॥

**कुलपतिरथवा महापदेष्टा शिशुषु परं सृजतीह संस्कृतिं स्वाम् ।**
**इयमुपचिनुते लतासधर्मा फलयितुमेव च जन्मनः फलानि ॥**

कुलपति या आचार्य शिशुओं में केवल अपनी संस्कृति को छाप छोड़ते हैं। और वह लता सी बढ़ जाती है जन्म के फलों ( पुरुषार्थों ) को फलने हेतु ॥२२॥

**प्रतिहतगतिरस्तु मा मनुष्यः पठतु भगीरथसाहसस्य विद्याम् ।**
**अभिजन-जनते सरस्वतीनाममृतसरांसि समर्प्य तोषयेच्च ॥**

मैं चाहता हूँ 'मनुष्यकी गति प्रतिहत न हो, वह भगीरथ-साहस की विद्या पढ़े और अपने वंश तथा अपनी जनता को सरस्वती ( भाँति भाँति की विद्याओं ) के अमृत रस समर्पित कर संतुष्ट करे' ॥२३॥

**जनकदुहित ! एष ते नियोगः शिशुविनयाय ममास्ति मान्यमान्यः ।**
**भवति हि भवती प्रजार्थतन्तुस्थितिविषये दृढमूलधर्मभित्तिः ॥**

इसलिए हे विदेहराज जनक की पुत्री, इन बच्चों के शिक्षण की तुम्हारी यह आज्ञा मुझे अतीव मान्य है। आप ही न हैं प्रजा (बच्चे और जनता) के हित की रक्षा में निरत धर्म की दृढ़ भित्ति ॥२४॥

**युगलमिदमतः परीक्ष्य शिक्षारुचिमनुरूपमहं प्रशिक्षयिष्ये ।**
**व्रजति विफलतां सतां प्रयासो रुचिपयसां शिखिवर्त्मकर्षणेन ॥**

**संकेतः**—पयो हि नीचैर्गमनशीलम्, शिखी चोर्ध्वगामी ॥२५॥

मैं इन दोनों को प्रशिक्षित करूँगा किन्तु यह देखकर कि इनकी रुचि कैसी शिक्षा के प्रति है, क्योंकि अच्छे शिक्षकों का भी प्रयास विफल हो जाता है यदि रुचिरूपी जल को अग्नि के रास्ते खींचा जाए ॥२५॥

**प्रथममिदमहं निभालयामि क्षितिपरिपालनदक्षमार्यवीर्यम् ।**
**स्फुरति कनकवद् विशुद्धिमुग्धं सुतयुगले तव वा नवेति पुत्रि ! ॥**

**संकेतः**—क्षत्रो हि क्षितिं परिपालयितुमेव लब्धसंज्ञः ॥२६॥

पहले तो मैं यह देखूगा कि तुम्हारे इन दोनों बच्चों में पृथ्वी की रक्षा में दक्ष सुवर्ण सी विशुद्ध जो आर्य शक्ति है वह स्फुरित हो रही है या नहीं ॥२६॥

**तदनु ललितसंविधानमार्गे ध्वनिमहिते सुजनान्तरात्मविद्ये ।**
**गणितखनिजशिल्पभूप्रतिष्ठानिगमपथेऽप्यनयोः प्रकाशमीक्षे ॥**

**संकेतः**—ध्वनिमहितः सुजनान्तरात्मविद्याभूतश्च ललितसंविधानमार्गः साहित्यतत्त्वमार्गः। खनिजं भूगर्भशास्त्रम्, शिल्पिमिति विज्ञानाभियान्त्रिकीशास्त्रम्, भूप्रतिष्ठा भूगोलशास्त्रम्। निगमः शास्त्रम् तच्च गणितादिभिः सर्वैरेव संबध्यते ॥२७॥

तब यह देखूँगा कि ये ललित कलाओं, सहृदयों की ध्वनि नाम से प्रपूजित आत्मविद्या (अपनी साहित्यविद्या) और गणित, खनिज, शिल्प (विज्ञान) और भूगोलशास्त्र में इनका अन्तःप्रकाश कैसा है ॥२७॥

**इदमखिलमपि ब्रवीमि पूर्वं मतिपरिपाकविधानमेव देवि ! ।**
**जन-जन-हित-संविधानमन्यद् भवति यदेतदतः परं ब्रवीमि ॥**

यह सब जो कह रहा हूँ यह तो बुद्धि को परिपक्व करने का उपाय है। जनजन का हितसंपादक उपाय दूसरा ही है। वह जो है उसे अब कहता हूँ ॥२८।

**सुपठितमपि भूयसा वृथैव द्विजललने ! भवतीह पण्डितानाम् ।**
**यदि भवति न तत् प्रजाप्रतिष्ठापरमफलाय निवासिनां समाजे ॥**

हे द्विजललने, पण्डितों का बहुत ही उत्तम अध्ययन भी निरर्थक हो जाता है यदि समाज में रहने वाले इन पण्डितों का वह अध्ययन प्रजा की प्रतिष्ठा के परमलाभ में सफल सिद्ध नहीं होता ॥२९॥

**बत, बुधजन एव सूत्रधारो भवति यदा प्रकृतेरनुक्रियायाः ।**
**जगति किमिति निष्क्रियत्ववज्रैरसमय एव हिनस्ति तां तदेषः ॥**

संकेतः—प्रकृतेरनुक्रिया हि यज्ञः । तां नाविद्वान् प्रवर्त्तयेत ॥३०॥

बड़े ही दुःख की बात है कि जब विद्वज्जन ही होते हैं सूत्रधार प्रकृति के अनुकरण ( रूपी नाट्य यानी यज्ञकार्य के, तब ये संसार में अपनी निष्क्रियता के वज्र से उस अनुकरण ( रूपी अंकुर ) को असमय में ही क्यों काट देते हैं ॥३०॥

**भवति कवयितुर्विपश्चितोऽदो व्रतमथवात्र महाव्रतं यदेषः ।**
**जनजनहृदयं प्रकाशराशेर्विशदतया विशदीकरोतु कामम् ॥**

कविता करने वाले विद्वान् का यह व्रत होता है, और व्रत ही नहीं, महाव्रत होता है, कि यह प्रत्येक व्यक्ति के हृदय को प्रकाशराशि की उज्ज्वलता से पर्याप्त उज्ज्वल करे ॥३१॥

**स हि परमतमो निजार्थदर्शी भवति जनः परिशील्य यस्तु शास्त्रम् ।**
**विपथगतिजुषां गतीर्निरोद्धुं विरततया यतते न लेशतोऽपि ॥**

वह बहुत ही बड़ा स्वार्थी है जो शास्त्रों का परिशीलन कर विरक्त हो जाता है और विपक्षगामी जनों को रोकने का स्वल्प प्रयत्न भीन हीं करता ॥३२॥

**इति रघुकुलकीर्तिकेतुभूते मनुजसमाजनियन्तरि द्विजातौ ।**
**तव कुश-लव-नाम्न्यपत्ययुग्मे प्रतिपदमस्मि समाजगां दिदृक्षुः ॥**

इसलिए तुम्हारे ये जो मनुष्य समाज के नियामक कुश लव नामक दो द्विजन्मा हैं देखना चाहता हूँ कि समाज के प्रति इनकी प्रवृत्ति कैसी है ॥३३॥

**भवति यदि न मे कथेयमच्छा वद तदभूत् किमु कारणं यदार्यः ।**
**स्थितिषु परमपूरुषोऽपि रामोऽत्यजदमलां भवतीमभिन्नचेताः ॥**

यदि मेरा यह कथन ठीक न हो तो बतलाओ वह कौन कारण था कि आर्य, महान्, मर्यादापुरुष और अभिन्नचित्त होते हुए भी राम ने आपको छोड़ दिया जो अमल थी ॥ ३४ ॥

**भगवति! परमेकमत्र तत्त्वं तव परिदेवनमूलमुन्नयामि ।**
**रघुपतिजनता न शिक्षितास्ति, भवति च तन्त्रमितः सतां विरक्तिः ॥**

भगवति, तुम्हारी इस वेदना का एक ही कारण मुझे दिखाई देता है । यह कि राम की प्रजा शिक्षित नहीं है । और इसमें कारण है विद्वानों, सत्पुरुषों और साधुजनों का वैराग्य ॥ ३५ ॥

**अयि बत, यदि विद्यया सतीनां न हि परिपालनमस्ति किं तया नः ।**
**सुरभिरपि वृथैव पायसैश्चेद् यदि न समेधयतेऽत्र विक्लवान् सा ॥**

बड़े ही दुःख की बात है । अरे, यदि विद्या से सतियों का संरक्षण नहीं होता तो उससे लाभ ही क्या ! कामधेनु भी मिल जाए तो वह किस काम की यदि वह अपने दूध से उन व्यक्तियों का पोषण नहीं करती जो दया के पात्र होते हैं ॥ ३६ ॥

**क्षणपरिमितमस्ति चेत् समस्तं चरमचरञ्च निरीक्ष्यमाणमेतत् ।**
**तदिह तरलवीचिकासु सिन्धुर्नियतमुपास्यतमो हि विश्वमूर्त्तिः ॥**

यदि ( उक्त महापुरुषों के वैराग्य का कारण बौद्धों जैसा यह चिन्तन हो कि ) चर और अचररूप यह समस्त विश्व क्षणिक ही है तो उन्हें ( वैदिकों का यह निर्णय भी स्मरण करना चाहिए कि ) चञ्चल तरंगों के बीच समुद्र के समान इस विश्व में छिपा एक विश्वमूर्त्ति तत्त्व भी है जो निश्चित ही सर्वाधिक उपास्य है ॥ ३७ ॥

**स च नरि नरि चेतनास्वरूपात् स्थितिमधिगम्य विभुश्चकास्त्यवास्ते ।**
**यदि न निगमशालिभिर्मनुष्यैरपचितिरस्य विधीयते कृतं तैः ॥**

संकेतः—अपचितिः पूजा ॥ ३८ ॥

वह विश्वात्मा प्रत्येक पुरुष में चेतनारूप से अवस्थित होकर प्रकाशित हो रहा है । यदि वे मनुष्य, जिसके पास अपौरुषेय वेद राशि भी है, इसकी पूजा नहीं करते तो उनसे क्या ? ॥ ३८ ॥

**इयमिह मम वर्तते मनीषा तव तनयावथ तद्वदेव सर्वे ।**
**द्विजकुलशिशवो जगन्ति विद्याविशदपथेन विवेकतो नयन्तु ॥**

यह जो मैंने कहा इसमें मैं कुल मिलाकर इतना ही कहना चाहता हूँ कि तुम्हारे ये दोनों पुत्र और इसी प्रकार द्विजकुल के सबके सब बालक, विद्या के उज्ज्वल पथ से सारे संसार को आगे बढ़ावें ।। ३९ ।।

**अथ च कमलपत्रतां दधाना विषयसरोऽम्भसि नीरजस्कभावात् ।**
**हृदयगगन आविलाभ्रभावैरनिबिडतां समुपार्जयन्तु सर्वे ।।**

और स्वयं विषयरूपी तालाब के जल में कमलपत्र की भाँति निर्लेप रहकर अपने हृदयाकाश को मलिनता के बादलों से न घिरने दें ।। ४० ।।

**इति सरलमना विवेकशीलो भुवनहितेच्छुरथान्तरे विरक्तः ।**
**अलमलमिति संकथां समाप्य प्रतिजगृहे रविवंशशावकौ तौ ।।**

इस प्रकार सरल चित्त, विवेकी, विश्वकल्याण के इच्छुक किन्तु चित्त से विरक्त वाल्मीकि ने 'बहुत हुआ बस, अधिक आवश्यक नहीं'—इन शब्दों में अपना वक्तव्य पूर्ण कर सूर्य वंश के उन दोनों बच्चों को स्वीकार कर लिया ।। ४१ ।।

**दिनमपि कथयाऽनयैव सार्धं स्थविरदशामगमत् पदे महर्षेः ।**
**गतवयसि विटे नु यत्र रागै रुचिचिकुराः सिततां निराचिकीर्षन् ।।**

संकेतः—रागै रंजनद्रव्यैः खिजाबादिलोकपदवाच्यैः ।। ४२ ।।

और महामुनि वाल्मीकि के आश्रम में दिन भी इसी वक्तव्य के साथ ही स्थविरदशा [ बुढ़ौती ] में जा पहुँचा, बूढ़े विट के समान उसके रुचिचिकुर ( केश जैसी किरणें ) भी रागों ( सायंकालीन ललोंई और खिजाब आदि बाल रंगने वाले पदार्थों ) से सफेदी दूर कर रहे थे ।। ४२ ।।

**वटुजन इव सान्ध्यिकः प्रणामस्वर उदियाय पतत्त्रिणां समूहे ।**
**ऋषिजन इव किं च दिग्विभागादुटजभुवं समियाय गोसमूहः ।।**

संकेतः—सान्ध्यिक इति 'तत्र नियुक्त' [ ४।४।६९ ] इति ठक् ।। ४३ ।।

( प्रस्तुत उपमानों में संध्या का वर्णन ) तब वेदपाठी मुनि बालकों के ही समान पक्षियों में भी सन्ध्याकालीन प्रणामस्वर जाग उठा। और गोसमूह भी ऋषिजनों की भाँति उटज के पास आ उपस्थित हुआ विभिन्न दिशाओं से ।। ४३ ।।

**हविरुपशममानिनाय धूमैर्हरिति हरित्यघमग्नये विसृष्टम् ।**
**श्रुतिसुभग ऋचां स्वरोऽन्तरीक्षं परिहृतपातकमातनोच्च पूर्णम् ।।**

अग्नि में डली आहुति ने धुएँ से प्रत्येक दिशा में पाप का शमन

आरम्भ कर दिया और श्रुतिसुखद वेदपाठ ने अन्तरिक्ष को भी निष्पाप बना दिया ॥ ४४ ॥

**अवनिरुहशिखासु सान्ध्यमोजः शलभसमूह इवाश्रयं विलेभे ।**
**उटजपरिसरे च दीपलक्ष्मीर्गृहहरिणीव रुचिं परां बभार ॥**

संकेतः—रुचिः कान्तिः, प्रियत्वं चेति श्लेषः । प्रकृतोभयौपम्यम् ॥ ४५ ॥

तब सान्ध्य प्रकाश वृक्षों की शाखाओं पर टिड्डियों की ही भाँति आश्रय लेने लगा तथा दीपलक्ष्मी पालतू हिरनी के ही समान उटज के समीप अधिक रुचि (चमक भी ) लेने लगी ॥ ४५ ॥

**अधिनिजलघुगोष्ठकं निरुद्धा सुरभिमृगार्भकसंहतिस्तदानीम् ।**
**प्रसुवमभि नितान्तमुत्सुकत्वात् प्लुतगतिरास विहङ्गतां गतेव ॥**

संकेतः—प्रसुवं जननीमभि प्रति । विहगार्भका अपि तदा तथैव ॥ ४६ ॥

अपने छोटे छोटे गोष्ठों में निरुद्ध बछड़े और मृगों के बच्चे भी उस समय अपनी म ता के लिए अतीव उत्सुक होकर आकाश में उछल रहे थे, मानो वे पक्षी हो गए हों ॥ ४६ ॥

**चरमगिरितटेऽथ सान्ध्यमोजो दवदहनादिव शिक्षते स्म रागे ।**
**सर इव खलु येन दिग्वधूटीघुसृणविवर्णमिवोर्ध्वमालुलोके ।**

संकेतः—चरमगिरिरस्ताचलः । तत्तटे दवदहनोपि विद्यमान एव । तत्र यथा रक्तिमा, तथा तदानीमाजस्यप्याविर्बभूव । घुसृणं कुंकुमम् ॥ ४७ ॥

सन्ध्याकालीन ओज पश्चिमाचल के तट पर रक्तिमा की शिक्षा दावानल से ही ले रहा था, जिस कारण, ऊपर की ओर दिग्बालाओं के कुंकुम से मिश्रित सरोवर सा दिखाई दे रहा था ॥ ४८ ॥

**दिवसशतदलं दलानि कृत्स्नान्यपि करसंपुटभावमापयित्वा ।**
**रविमभि हृदयेन यामयात्राप्रणतिपरं भुवनान्तरे व्यलोकि ॥**

संकेतः—रविमभि प्रति । भुवनं जलमपि ॥ ४८ ॥

दिनरूपी शतदल कमल भी अपनी सभी पंखुँड़ियों को अंजलि बनाकर सूर्य की ओर अन्तिम प्रहर को यात्रा की प्रणामाञ्जलि देता सा दिखाई दे रहा था भुवन ( विश्व और जल ) के बीच ॥ ४८ ॥

**चतसृषु हरितां वनीषु यस्मादवतरति स्म सिताऽसिता तदानीम् ।**
**रजनिमुखतमःकपोतपाली निववृतिरे निलयाय तेन हंसाः ॥**

**संकेत:**—रजनिमुखं निशामुखम्। तम एव कपोतपाली। हंसाः सूर्य-रश्मयोपि ॥ ४९ ॥

उस समय चारों दिशाओं की वनस्पतियों में निशामुख के तम की चितकबरी कपोतपाली उतर रही थी अतः हंस ( सूर्यकिरण रूपी हंसपक्षी ) निलय की ओर लौट पड़े ॥ ४९ ॥

**भवति विरलसंहतेः सदैव द्युतिमहतोपि जनस्य शत्रुशातः।**
**इति वदति नु दीपकस्तमांसि शिरसि विधृत्य रवौ गतेऽस्तगर्भे ॥**

तेजस्वी व्यक्ति भी यदि संघहीन हो जाए तो उस पर भी शत्रु का आक्रमण हुए विना नहीं रहता यही कहता—कहता दीपक अपने सिर पर अन्धकार धारण कर रहा था सूर्य के डूब जाने पर ॥ ५० ॥

**अथ विलुलिततारकं नभोऽभून्नयनमिव द्युतिशून्यमन्धकारे।**
**विरल-खग-रुतैश्चराचरस्य करुणतमां च दशां लता विवव्रुः ॥**

**संकेत:**—तारकपदेन नयनपक्षे कनीनिका ग्राह्या। निशामुखे तस्या अपि विलुलितत्वमानुभविकम् ॥ ५१ ॥

उसके पश्चात् द्युतिशून्य आकाश अन्धकार छा जाने पर विलुलिततारक ( जिसमें तारे टिमटिमा रहे थे ) होने लगा ( विलुलित है पुतली जिसमें ऐसे ) नेत्रों के ही समान। और लताएँ पक्षियों की बिरल चहचहाहट के स्वर में चराचर की करुणतम दशा की कहानी कहने लगी ॥ ५१ ॥

**तदनु कपिलधेनुतां दधाना विशदरुचामपदेशतः स्वदुग्धैः।**
**अधिगत-शशि-वत्सका निशा सा भुवनघटं परिपूरयांबभूव ॥**

तब चन्द्रमा का बछड़ा पाकर कपिला धेनु बनी उस रात ने उज्ज्वल किरणों के वहाने अपनी दुग्ध धाराओं से भुवनघट को परिपूर्ण कर ( लवालव भर ) दिया ॥ ५२ ॥

**विरलमधुपबाधया तटाके निभृतपरागहृताऽनिलेन सार्धम्।**
**कुमुददयितया विभावरीशद्युतिषु च विभ्रमलास्यकं नु तेने ॥**

**संकेत:**—हृता हरणशीलेन ॥ ५३ ॥

और सरोवर में निभृत पराग चुराते अनिल के साथ कुमुदिनी ने चन्द्रमा

की चाँदनी में विभ्रमपूर्ण लास्य करना आरम्भ कर दिया, मधुपबाधा के कम हो जाने से ॥५३॥

**निभृतहरिणसंचरासु रथ्यास्वमृतकरेण सुधाभिरुक्षितासु ।**
**अभवदिव समीरणो वियोगी पथिक इयाय य उत्पथं वनान्ते ॥**

**संकेत:**—अमृतकरः शशी। निभृतेत्यादिना जनरहितत्वमुद्भावितम्। सुधोक्षितत्वेन च पथिकं प्रति नितान्तदुःसहता एकमात्रधवलत्वेन च भ्रमसंभवः प्रकटः ॥५४॥

जिनमें हरिणों का संचार समाप्त हो गया था और जिन्हें चन्द्रमा ने अपनी सुधा (अमृत तथा छुई मिट्टी) से सींच दिया था ऐसी वीथियों में वायु वियोगी पथिक सा घूमने लगा। वह यहाँ वहाँ जो भटक रहा था ॥५४॥

**कृतदिवसविरामधर्मकृत्यः कुलपतिराश्रमिभिः स संपरीतः ।**
**कुशलवशिरसोः स्वपाणिपद्मं व्यधृत च तां विससर्ज संसदं च ॥**

कुलपति वाल्मीकि ने भी आश्रमवासियों के साथ सायंकालीन धर्मकृत्य पूर्ण कर कुशलव के सिर पर हाथ रखा तथा उस सभाका विसर्जन कर दिया ॥५५॥

**ऋषिमुनिसमितिर्निशामुखे सा कवयितुरस्य निदेशतो विसृष्टा ।**
**अविशदुटजमुत्पलं दिनश्रीरिव यदिवा हृदयं चितः प्रवृत्तिः ॥**

**संकेत:**—उपमानद्वयमप्यत्र प्राकरणिकम्। चितः प्रवृत्तेर्हृदयप्रवेशो मुनीनां योगनिद्रां गमयति ॥५६॥

इस कवि के आदेश से ऋषियों और मुनियों की वह विसर्जित सभा अपने अपने उटजों में प्रविष्ट हुई वैसे ही जैसे दिनश्री उत्पल में अथवा हृदय-प्रवृत्ति चेतना में ॥५६॥

**उपनयनविधिं विधाय सून्वोरिति दुहिता जनकस्य शुद्धबुद्ध्योः ।**
**निजमुटजमियाय तत्समेता मुनिवचनात्, प्रथमो गुरुः प्रसूर्हि ॥**

**संकेत:**—सुतसमेतत्वे हेतुः मुनिवचनम्। तस्य च पोषकं मातुः प्रथमगुरुत्वम् ॥५७॥

जनक की पुत्री सीता भी अपने शुद्धबुद्धि बच्चों की उपनयनविधि इस प्रकार संपन्न कर उन वाल्मीकि मुनि के ही आदेश से अपने उन दोनों बच्चों के साथ अपने उटज लौटीं। बात यह है कि माता ही हुआ करती है प्रथम और प्रधान गुरु ॥५७॥

निगमविधिभिरेतौ सूरिराद्यः परेद्युर्
विधृतयजनसूत्रौ क्षौरभद्रोत्तमाङ्गौ ।
धृत-चलदल-दण्डौ मुञ्जिनौ चापि कृत्वा
बलिनियमकृते हि प्रापयद् वामनत्वम् ।।

संकेत:—बले राक्षसविशेषस्य बलिनां च नियमकृते नियन्त्रणायेत्युभयत्राप्यनुगामि । चलदलोऽश्वत्थः ।।५८।।

दूसरे दिन उन्हीं मुनि ( वाल्मीकि जी ) ने वैदिकविधियों से उन दोनों बच्चों का मुण्डन करा उन्हें यज्ञोपवीत सूत्र पहनाए, अश्वत्थ के दण्ड दिए और मूँज की मेखला पहनाई और इस प्रकार उन्हें बलि-नियमन के लिए ही वामन बना दिया ( वामन भगवान् ने बलि नामक असुर का नियमन किया था, कुमारों को करना है बली बलवानों का नियमन ) ।।५८।।

तदनु नियमशुद्धौ तौ परां चापरां च
प्रतिपदमुपदिश्य प्राच्यविद्यां कवीन्द्रः ।
अगमयत् पटिष्ठामस्त्रविद्यां च दिव्यां
न हि भवति वृषात्मा धर्म उत्सृष्टशृङ्गः ।।

संकेत:—परा विद्या उपनिषदः । अपरास्तदतिरिक्ताः । वृषो हि धर्मप्रतीकः । स च प्रकृत्या हिंसारहितोऽपि रक्षणाय हिंसासाधनं शृङ्गं दधदेव पुराविद्भिरालेख्यते । हरप्पादिषु प्रियदर्शिस्तम्भेषु कालिदासादिषु च तथा तस्योपलब्धेः । तथा च कालिदासः—"खे खेलगामी तमुवाह:०० धुन्वन्मुहुः प्रोतघने विषाणे" [ कु० ७।४९ ] इति ।।५९।।

उसके पश्चात् उन कवीन्द्र (वाल्मीकि जी) ने नियमों में शुद्ध उन दोनों बालकों को परा और अपरा ये दोनों प्राच्य विद्याएँ अक्षर अक्षर करके पढ़ा दीं । और तब अतीव सूक्ष्म और दिव्य अस्त्रविद्या भी उन्हें दे दी । ऐसा इसलिए कि हमारा जो वृषरूप भगवान् धर्म है वह ( हिंसक तो नहीं है परन्तु ) सींग नहीं छोड़ता ।।५९।।

सकलमतिगुणौ तौ सार्धमन्यैश्च बालै-
र्गुरुजनवचनानां पालने दत्तचित्तौ ।
स्मरणमिव सुबुद्धी सर्वमेवाध्यगातां
भवति निगमलाभो गर्भ एवार्यजातौ ।।

संकेत:—'शुश्रूषाश्रवणग्रहणधारणोहापोहार्थविज्ञानमत्वज्ञानानि धीगुणाः' ।।

बुद्धि के सभी (सातों या आठों) गुणों से युक्त और गुरु की आज्ञा के पालन में दत्तचित्त वे दोनों सुबुद्धि बालक अपने अन्य सहाध्यायियों के साथ सभी विद्याएँ ठीक से जान गये। आर्यजाति में तो वेदबोध गर्भ में ही हो जाता है ॥६०॥

**कविमतिरिव साध्वी दर्शने सत्पदस्य**
**नियतिरिव च धीरा कर्मयोगेषु सापि।**
**अलभत सति चित्ते स्वेऽक्षरं ज्योतिरेकं**
**प्रियविरहपतङ्गो यत्र शान्तिं प्रयातः ॥**

**संकेतः**—सत्पदं कविपक्षे शोभनानि पदानि। कर्मयोगः फलासंगविवर्जितः कार्यविधिः, पक्षे अदृष्टरूपकर्मणां योगेषु विनियोगेषु। स्वे स्वकीये। ज्योतिरात्म-ज्योतिः ॥६१॥

सत्पद के दर्शन में कविमति के समान साध्वी और कर्मयोगों में नियति के समान दृढ़ धीर सीता भी अपने शुद्ध चित्त में एक ज्योति पा गई, जिसमें प्रिय-विरह का शलभ शान्त हो गया ॥६१॥

**स्तनयुगपरिवेषे कुङ्कुमश्रीर्विभूत्या,**
**करयुगमणिबन्धे कौतुकश्रीः कुशैश्च।**
**वपुषि सितदुकूलश्रीः श्रिया वल्कलानां**
**विनिमयमिव लब्ध्वा चक्रुरस्यां तपांसि ॥**

**संकेतः**—मणिबन्धः अङ्गविशेषः। कौतुकं हस्तसूत्रम् ॥६२॥

तब सीता के शरीर पर आँचल के परिवेष में लगने वाली कुंकुमश्री भी भस्म का रूप अपनाकर मानों तप करने लगी, कलाइयों में मङ्गल सूत्र कुशों का रूप धारण कर और शरीर पर सफेद दुकूल की शोभा वल्कलों की शोभा का रूप लेकर ॥६२॥

**इति सुतयुगली सा, सा च तस्याः सवित्री**
**ऋषि-मुनि-कवि-ताढ्ये धाम्नि तत्रात्मलाभम्।**
**अलभत हिमशैले भारतीया यथा भूः**
**सह निजतनयाभ्यां भोटनेपालकाभ्याम् ॥**

**संकेतः**—भोटो भूटाननाम्ना प्रचलितः प्रान्तः। तादृश एव च नेपालः। हिमाचले प्रसिद्धाभ्यां ताभ्यां युक्ता आर्यभूर्भारतभूमिः यथा आत्मलाभं लभते तथैव सीतापि तत्सुताभ्यां सहात्मलाभं सफलत्वमध्यात्मसिद्धिं चालभत ॥६३॥

इस प्रकार दोनों पुत्रों और उनकी उस जननी ने उस ऋषित्व, मुनित्व और कवित्व से समृद्ध आश्रम में उसी प्रकार आत्मलाभ किया जिस प्रकार हिमाचल पर भारतीय भूमि आत्म लाभ करती है अपने पुत्र भूटान और नेपाल के साथ ॥६३॥

इति सनातनकवि-श्रीमद्रेवाप्रसादद्विवेदिकृतौ 'सीताचरित'—
नाम्नि सर्गबन्धे विद्याधिगमो नाम
सप्तमः सर्गः ॥ ७ ॥

# अष्टमः सर्गः

**प्रतिपादितपुत्रा सा कवये दिव्यचक्षुषे ।**
**बभावर्पितशब्दार्था प्रतिभेव सुमङ्गला ॥**

**संकेतः**—सुमङ्गला कल्याणी, न तु विनाशिनी ॥ १ ॥

दिव्य दृष्टि कवि को दोनों पुत्र अर्पित कर सीता शब्द और अर्थ को अर्पित करने वाली मांगलिक प्रतिभा सी लग रही थी ॥ १ ॥

**सोऽपि बालान्, कणान् दीर्घसत्राग्निज्योतिषो यथा ।**
**अभ्यासैश्चन्दनैर्यद्वत् पोषयन्नुग्रवद् बभौ ॥**

**संकेतः**—दीर्घत्वेन तादृशशिक्षासत्रस्यापि नित्यप्रवृत्तत्वमाक्षिप्तम् । अभ्यासाः पाठाः । उग्रो दीक्षितात्मनि समाविष्टस्तन्नामा शिवः ॥ २ ॥

दीर्घ सत्र की अग्नि के स्फुलिङ्गों जैसे उन और अन्य बच्चों को अभ्यास रूपी चन्दन का हविष्य दे देकर परिपुष्ट करते कवि वाल्मीकि भी भगवान् उग्र जैसे प्रतीत हो रहे थे । [ उग्र यानी अष्टमूर्ति की वह मूर्ति जो दीक्षित यजमान में संक्रान्त होती है । देखिये हेमाद्रिकृत रघुवंशदर्पण ५।४ ] ॥ २ ॥

**चातुर्विद्यवने मत्तमातङ्गत्वमुपागतौ ।**
**सच्छात्रस्य शुभां वृत्तिं तावपि व्याख्यतामलम् ॥**

**संकेतः**—चत्वारो विद्या एव चातुर्विद्यम्, भावे ष्यञ् ॥ ३ ॥

उन दोनों शिष्यों ने भी चारों विद्या के गहन कान्तार में मदमत्त गजराज बनकर अच्छे छात्रत्व की शुभ वृत्ति की व्याख्या भलीभाँति कर दी ॥ ३ ॥

**साङ्गेषु सर्वशास्त्रेषु भावितौ वीक्ष्य तौ कविः ।**
**समावर्तनसंस्कारहेतोः काव्यं निजं जगौ ॥**

**संकेत**—काव्यं रामायणम् । ॥ ४ ॥

अंगों सहित सभी वेदों और शास्त्रों में उन दोनों को भावित देख कवि ने समावर्त्तन संस्कार के लिए अपना काव्य (रामायण) भी सस्वर पढ़ा दिया ॥ ४ ॥

**एवं सीता, सुनौ तस्याः, स चापि गुरुरेतयोः ।**
**अन्वार्थयन् निजैर्धर्मैराश्रमत्रि यं निजम् ॥**

**संकेतः**—आश्रमत्रितयं गार्हस्थ्यम्, ब्रह्मचर्यम्, वानप्रस्थं चेति। तत्र सीता गार्हस्थ्यम्, सुतौ ब्रह्मचर्यम्, वाल्मीकिश्च वानप्रस्थम् । तदत्यागश्च पुत्र-पालनार्थः ॥५॥

इस प्रकार सीता, उनके दोनों पुत्र और उनके गुरु (वाल्मीकि) तीनों ने स्वस्वधर्म के परिपालन द्वारा तीनों आश्रमों को अन्वर्थ (सार्थक) बना दिया ॥ ५ ॥

**निरस्त-तमसावन्त-र्बहिर्ध्वस्तरुजौ च तौ ।**
**अन्वहार्ष्टां समुल्लेखशुद्धौ रत्नमहोपलौ ॥**

**संकेतः**—समुल्लेखः शाणोत्कषणम् ॥ ६ ॥

वे दोनो बालक भीतर से निरस्ततम ( तमः अज्ञान, रोग ) थे और बाहर से भी नीरोग। इसलिए ऐसे लग रहे थे जैसे तरास कर तैयार की गयी दो रत्नशिलाएँ हों ॥ ६ ॥

**आत्मेन्द्रियमनो - बुद्धि - प्रसाद - शुभ - विग्रहौ ।**
**रक्षितुं क्ष्मां क्षमामेतौ दिङ्मातङ्गाविवोहतुः ॥**

**संकेतः**—"प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयत" इत्यभियुक्तोक्त्या स्वस्थाविति फलितोर्थः ॥ ७ ॥

आत्मा, इन्द्रिय, मन और बुद्धि से प्रसन्न अतः शुभ शरीर वाले वे दोनों पृथिवी के रक्षण की शक्ति दिग्गजों के समान धारण किए हुए थे ॥ ७ ॥

**अनुभावातिभूभूताविमावाश्रमिणां पदम् ।**
**ररक्षतुस्ततस्तेजोव्ययं चापि महामुनेः ॥**

**संकेत**—अनुभावः प्रभावः। ततः आश्रमपदरक्षणात् तद्रक्षणे संभाव्यं तेजोव्ययं च ररक्षतुरिति योजना ॥ ८ ॥

अत्यन्त दिव्य प्रभाव वाले इन बालकों ने आश्रमवासियों के स्थानों की रक्षा करना आरम्भ कर दिया और उसी के द्वारा महामुनियों के तपोव्यय की भी ॥ ८ ॥

**वटुभिर्वेष्टितौ तौ हि सदृशैर्भूरितेजसौ ।**
**ख्यापयामासतुर्वीतध्वान्तां स्वाध्यायपद्धतिम्**

**संकेतः**—छात्राणामुत्तमं स्वास्थ्यं समानत्वं च स्वाध्यायपद्धतेः शुद्धि प्रमाणयतः ।।९।।

समान बटुओं से घिरे अतीव तेजस्वी वे दोनों बालक स्वाध्याय की निष्कलुष पद्धति का निदर्शन थे ।।९।।

**पर्याप्तवक्षसो दीर्घबाहवः पीनकन्धराः ।**
**शातोदराश्च ते शिष्या वर्णदण्डैर्हि भेदिनः ।।**

**संकेतः**—वर्णा ब्राह्मणादयः, तत्र ब्राह्मणस्य पालाशः, क्षत्रियस्य पैप्पलः, वैश्यस्य चौदुम्बरो दण्डः ।।१०।।

उन सब बालकों के वक्षःस्थल काफी चौड़े थे, भुजाएँ लम्बी थीं, ग्रीवा परिपुष्ट और मांसल थी, किन्तु उदर क्षीण थे। वे सब शिष्य तत् तत् वर्ण के लिए नियत दण्डों को देखने से ही भिन्न प्रतीत होते थे ।।१०।।

**अनुशासितचेतःसु तेषु दायित्वधूरभूत् ।**
**पर्याप्तप्रसरा लक्ष्मीर्यथा वक्षसि शार्ङ्गिणः ।।**

दायित्व की धुर अनुशासित चित्त वाले उन बालकों पर उसी प्रकार पर्याप्त प्रसार लिए थी जिस प्रकार भगवान् विष्णु के वक्षःस्थल पर लक्ष्मी ।।११।।

**कुलं कुलपतेरासीद् विनीतैस्तैर्वृतं तथा ।**
**यथा तस्यैव सद् वर्ष्म दान्तान्तःकरणेन्द्रियम् ।।**

**संकेतः**—तस्यैव कुलपतेरेव वर्ष्म शरीरम्, दान्तानि अन्तःकरणानि मनआदीनि इन्द्रियाणि ज्ञानकर्मणोरिन्द्रियाणि चक्षुःपाणिप्रभृतीनि ।।१२।।

कुलपति का उन विनीत बालकों से युक्त कुल भी ऐसा लग रहा था जैसा उन्हीं ( कुलपति ) का दान्त अन्तःकरण और दान्त इन्द्रियों से युक्त शरीर ।।१२।।

**राष्ट्रमुच्छ्वसिति स्मात्र प्राणिति स्म च संस्कृतिः ।**
**सदाचार-विचारौ हि तयोः प्रभव आदिमः ।।**

**संकेतः**—संश्चासावाचारः संश्चासौ विचारश्चेति विग्रहः। तयोः राष्ट्र-संस्कृत्योः। तत्र राष्ट्रस्य प्रभवः सदाचारः, राष्ट्रस्य कर्मरूपधर्माश्रितत्वात्, संस्कृतेश्च प्रभवो विचारः, तस्या दर्शनाश्रितत्वात् ।।१३।।

इस कुल में राष्ट्र ( हर्ष के ) उच्छ्वास ले रहा था और संस्कृति प्राणवती बन रही थी। सद् आचार, और सद् विचार ही होते हैं इन दोनों के स्रोत ।।१३।।

इत्थं मुनेः पदं कल्पतरोश्छायामिव श्रिता ।
सीता संपूर्णकामाभूद्, विफलत्वं क्व सत्पदे ॥

**संकेतः**—संपूर्णकामत्वं च पुत्रसंस्कारात्, आत्मनो दर्शनाच्च ॥१४॥

इस प्रकार वाल्मीकि के कल्पतरु की छाया जैसे उस आश्रम में सीता पूर्ण-काम हो गई [ पुत्रशिक्षा तथा योगसिद्धि रूपी कामनाओं के पूर्ण हो जाने से ]। सत्पद ( सज्जनों के स्थान ) में विफलता कैसी ॥१४॥

अथ खण्डत्वमुद्वास्य कर्तुमेकात्मतां भुवः ।
दिग्जयायाश्वमेधाश्वं व्यसृजत् कोसलेश्वरः ॥

**संकेतः**—पृथिव्याः खण्डत्वं निराकर्तुं रामेणाश्वमेधश्चिकीर्षितः, न तु स्वर्गायेति नूतनता यज्ञफले ॥१५॥

इधर कोसलेश्वर भगवान् राम ने पृथिवी पर खण्डता दूर कर उसे अखण्ड बलाने हेतु दिग्विजय का उपक्रम किया और उसके लिए अश्वमेध का अश्व छोड़ा ॥१५॥

तद्रक्षणप्रसङ्गेन बलेन महता वृतः ।
लक्ष्मणस्यौरसश्चन्द्रकेतुराश्रममाप तम् ॥

उस अश्व की रक्षा के सिलसिले में लक्ष्मण का औरस पुत्र चन्द्रकेतु बहुत बड़ी सेना के साथ ( वाल्मीकि ) आश्रम पहुँचा ॥१६॥

तद्वीराणां जयोद्घोषानन्यक्षत्रावमानिनः ।
सोढुं नाशक्नुतां सीतासुतौ वीरौ स्वभावतः ॥

उसके वीर सैनिक जयघोष कर रहे थे, किन्तु उसमें दूसरे क्षत्रिय वीरों के अपमान के उद्गार भी थे, अतः स्वभाव से वीर होने के कारण उन जनघोषों को सीता के पुत्र सह नहीं सके ॥१७॥

तावश्वस्य निरोधं हि तादृशामुत्तरं गिराम् ।
अमन्येतां, कटूक्तीनां कटूक्त्या प्रशमः कुतः ॥

उन दोनों उस प्रकार की अपमानपूर्ण उक्तियों का अश्व के निरोध में ही देखा । भला कटु उक्तियों का शमन कटूक्तियों से कहीं हुआ है ? ॥१८॥

चन्द्रकेतुबलं मत्वा पूर्वं तद् बालचापलम् ।
हेलयैव हयं ताभ्यामायसत् कर्तुमात्मसात् ॥

चन्द्रकेतु की सेवा ने पहले तो इसे बालजनोचित चपलता समझा, और यूँ ही उनसे अश्व प्राप्त कर लेना चाहा ॥ १९ ॥

**पश्चात् तयोर्धनुर्मेघ–शर–वर्षैर्निपीडितम् ।**
**तद्धि प्रधनमेवात्र साधनं प्रत्यपद्यत ॥**

**संकेतः—**प्रधनम् युद्धम् । साधनमश्वप्राप्त्युपायम् ॥२०॥

किन्तु उन बालकों के धनुषरूपी मेघ की बाणवर्षाओं से पीडित उस ( सेना ) ने युद्ध को ही आवश्यक साधन माना ॥ २० ॥

**एकतो मुनिबालौ द्वावन्यतो महती चमूः ।**
**आश्चर्यसाहसोत्साहा आसँस्तत् तत्र दर्शिनः ॥**

एक ओर केवल दो मुनिबालक थे और दूसरी ओर अति विशाल रणवाहिनी, अतः उस समय आश्चर्य, साहस और उत्साह ही थे उस युद्ध के दर्शक ॥ २१ ॥

**एकत्र तमसातीरतपोऽन्यत्र बलोदधिः ।**
**कारुण्यैकरसं तस्मात् पूर्वं युद्धं व्यभाव्यत ॥**
**पश्चाद् बालावदृश्येतां कन्यावृषरवी यथा ।**
**सैन्याम्बुदसमुद्रेऽस्मिञ्छोषाय शररश्मिभिः ॥**

इस प्रकार एक ओर तमसा तट था और दूसरी ओर सैन्यसागर, जिससे वह युद्ध आरम्भ में तो केवल करुण रस का ही विभाव बना ॥२२॥

किन्तु बाद में वे दोनों बालक ऐसे दिखाई दिए जैसे कन्या ( आश्विन ) और वृष ( ज्येष्ठ ) के सूर्य हों बाणरूपी रश्मियों से उस सैन्यरूपी मेघाडम्बर या समुद्र को सोखने हेतु ॥ २३ ॥

**तयोः शस्त्रे च शास्त्रे च समानं वीक्ष्य विक्रमम् ।**
**भारती भारतस्यास्य प्रीतिलास्यं तदाऽऽददे ॥**

उस समय उन बच्चों का पराक्रम शस्त्र और शास्त्र दोनों में बराबर देखकर इस भारत देश की भारती खुशी से नाच रही थी ॥२४॥

**कविः कारुण्यभूर्यो हि पित्रे रामायणं व्यधात् ।**
**आसीदद्य स पुत्राभ्यां शौर्यबन्धाय बाधितः ॥**

और श्रीवल्मीकि, जिन्होंने पिता के लिए रामायण नामक करुण रस का काव्य लिखा था वे ही आज बाध्य हो गए थे इन पुत्रों के लिए वीर रस का काव्य लिखने हेतु ॥ २५ ॥

**तटस्थत्वाद् विकारेभ्यः शुभोदर्कतया च सः ।**
**युद्धमेतन्निरोद्धुं नो मुनिरैच्छन्महामतिः ॥**

महामति मुनि वाल्मीकि ने इस युद्ध को रोकना नहीं चाहा, इसलिए कि एक तो वे विकारों से तटस्थ थे, दूसरे वे जानते थे कि उसका परिणाम अच्छा होने वाला है ॥ २६ ॥

**हन्त पर्जन्यधारासु विभावसुकणा इव ।**
**बालयोरस्त्रवर्षासु चमूबाणा वृथाऽभवन् ॥**

अब क्या कहना था। बच्चों के बाणों की वर्षा में सेना के बाण व्यर्थ हो गए, पर्जन्य ( मेघ ) की धाराओं में अग्नि के कण के समान ॥ २७ ॥

**यद्वा प्रलयकालाग्नौ यथा तेजसि बालयोः ।**
**महतामपि योद्धॄणां पतङ्गत्वं शरा ययुः ॥**

अथवा यह कहना चाहिए कि दोनों बालकों के तेज में बड़े से बड़े योद्धाओं के भी बाण महाप्रलय की अग्नि में शलभ सिद्ध हुए ॥ २८ ॥

**क्व रथाः क्व च मत्तेभाः क्व हयाः क्व च पत्तयः ।**
**इति यत्र न योद्धारोऽबुध्यन्त कृतबुद्धयः ॥**
**क्व तलं क्व जलं क्व द्यौः क्व ग्लौः क्वाग्निः क्व भानुमान् ।**
**इति यत्र न धूलीनां पटले प्रत्यपद्यत ॥**

**चन्द्रकेतुभटानां तत् प्रधनं निधनं व्यधात् ।**
**ब्रह्मबालास्त्रसंपाताद् देहे पश्चात्, पुरा मतौ ॥**

**संकेतः**—ग्लौरिति युद्धस्याहर्निशप्रवृत्तत्वमनेकदिवसव्यापित्वं च सूचितम् ॥३०॥

उस युद्ध में ऐसी धूल उड़ी कि सेना के वीर लोग काफी कुशल योद्धा होने पर भी और काफी ध्यान से देखने पर न तो यही जान पा रहे थे कि कहाँ रथ है और कहाँ मत्तेभ ( मदमाते हाथी ) तथा कहाँ घोड़े हैं और कहाँ पदाति सैनिक' और नहीं समझ पा रहे थे कि 'कहाँ ( भूमि ) तल है और कहाँ जल, कहाँ आकाश है और कहाँ उसका चन्द्र तथा कहाँ अग्नि है और कहाँ सूर्य ॥ २९–३० ॥

उस युद्ध में ( रामरूपी ) ब्रह्म के पुत्रों कुश लव ) के अस्त्रसंपात ने चन्द्रकेतु के भटों का संहार शरीर से बाद में किया बुद्धि से पहले ॥ ३ ॥

**आत्मना सा हि रामस्य युयुत्साऽऽसीत् परिच्छदे ।**
**अद्वैत-द्वैतयोर्यद्वत् संख्या काऽत्र जयाजये ॥**

**संकेतः**—रामस्येति आत्म-परिच्छदाभ्यां काकाक्षिगोलकवद् योज्यम् । युयुत्सा चात्र परिच्छदैकवृत्तिरभ्युपेया । संख्या बालयोर्द्वित्वम्, सैन्यानां चासंख्यत्वम्, इति योयं सख्याव्यतिरेकः स जये अजये वा अप्रयोजकतामात्राश्रयः । परिच्छदपदेन शरीरादीनामपि ग्रहणाद् यथा आत्मनि कृपा-सुधां वर्षत्येव शरीरादीनि सक्रियाणि तिष्ठन्ति, येन च तेभ्यः सकाशाद् आत्मन एव बलवत्त्वं सिद्धयति, तथैव प्रकृतेऽपि ॥ ३२ ॥

राम की सेना की यह युद्धेच्छा राम की ही आत्मा के साथ युद्ध करने की इच्छा थी, जैसे द्वैत की इच्छा हो अद्वैत के साथ युद्ध करने की। इस युद्ध में जय पराजय का भान भला कैसे हो सकता था ॥ ३२ ॥ ( इस प्रकार जब काफी युद्ध हो चुका तो उसमें जृम्भकास्त्र का उदय हुआ । )

**सुप्तौ ताटस्थ्यमापन्न आत्मनीन्द्रियवत् ततः ।**
**जृम्भकास्त्रोदयादासाञ्चक्रे सैन्यं गतासुवत् ॥**

**संकेतः**—सुप्तिर्निद्रा । आपन्ने आपद्यमान इत्यर्थः, आद्यकर्मणि क्तः गतासुर्मृतः

तब जृम्भकास्त्र के उदय से सारी सेना मृत जैसी स्तब्ध हो गई, जैसे सुषुप्ति में आत्मा के तटस्थ हो जाने पर इन्द्रियाँ स्तब्ध हो जाती हैं ॥ ३३ ॥

**प्रतिबिम्बं प्रतीबिम्बाभ्यां यथा लक्ष्मणात्मजः ।**
**रामात्मजाभ्यां संघर्षमज्ञानादातनोत् ततः ॥**

**संकेतः**—प्रतिबिम्बसंघर्षः ४४--पद्येत्रैव सर्गे द्रष्टव्यः ॥ ३४ ॥

लक्ष्मण के पुत्र ( चन्द्रकेतु ) ने राम के पुत्रों के साथ प्रतिबिम्ब का अन्य प्रतिबिम्बों के साथ युद्ध जैसा जो यह युद्ध किया इसमें एक ही कारण था, केवल अज्ञान अर्थात् अप्रत्यभिज्ञा ॥ ३४ ॥

**आसीद् विक्लवता तेषु को नु कं प्रहरेदिति ।**
**आत्माऽऽत्मानं विजानाति प्रमाणं तत्र नेष्यते ॥**

**संकेतः**—तेषु लव-कुश-चन्द्रकेतुषु । विजानातीति अबोधपूर्वं प्रत्यभिज्ञानम् ।

वे पसोपेस में थे कि कौन किस पर प्रहार करे। आत्मा ( अज्ञात रूप से ) आत्मा को पहचानती रहती है। उसमें प्रमाण की अपेक्षा नहीं रहती ॥ ३५ ॥

**परस्परमुखालोकोज्जासितामर्षयोरपि ।**
**औचित्यमात्ररक्षायै ततज्ये धनुषी तयोः ॥**

**संकेतः**—उज्जासित उत्सारितोऽमर्षो ययोः तयोः। तते रोपिते ज्ये प्रत्यञ्चे ययोस्ते ॥ ३६ ॥

उनके क्रोध तो एक दूसरे के मुख देखते ही दूर हो गये थे, अतः धनुष केवल औचित्य की रक्षा के लिए तने ॥ ३६ ॥

**उत्साह-क्रोध-वार्त्ताऽपि तयोरासीन्न पक्षयोः ।**
**नटयोरिव किन्त्वासीत् प्रयोगे पटिमा परः ॥**

**संकेतः**—नटे अभिनेतरि स्थायिनो रसस्यापि वा अभावात् ॥ ३७ ॥

उन दोनों में उत्साह ( वीरस्थायी ) और क्रोध ( रौद्रस्थायी ) की बात भी नहीं थी, किन्तु ( अस्त्र ) प्रयोग में पटुता अपूर्व थी, नटों ( नटों के दो पक्षों ) के समान ॥ ३७ ॥

**लाघवातिशयं प्रेक्ष्य प्रयोगेऽस्त्रस्य तत्क्षणे ।**
**अस्त्रवेदोऽपि कार्तार्थ्यं बालाभ्यां प्रत्यपद्यत ॥**

उस क्षण अस्त्र के प्रयोग में अतीव लाघव का दर्शन कर उन बालकों का अस्त्रवेद भी कृतार्थता को प्राप्त हो रहा था ॥ ३८ ॥

**मेघनादस्तयोः कण्ठे रावणश्चापयोस्तथा ।**
**कुम्भकर्णश्च सैन्येषु तदानीमाश्रयं गताः ॥**

उस समय उनके कण्ठ में मेघनाद [ मेघध्वनि ], धनुषों में रावण [ घोर राव ] और सैन्य में कुम्भकर्ण [ घोर निष्क्रियता ] आ छिपे थे ॥ ३९ ॥

**तदानीं चापनिर्घोषैरस्त्रनिष्पेषणैस्तथा ।**
**आपूर्यत दिशां कुक्षिः सिंहीनां तु व्यरिच्यत ॥**

उस समय धनुषों के जो निर्घोष और अस्त्रों की टक्कर हुई उससे दिशाओं की कुक्षि तो भर गई, परन्तु सिंहियों की खाली हो गई ॥४०॥

**अग्नावग्निमिवाहूय वज्रे वज्रं निपात्य वा ।**
**यत्र युद्धं प्रवृत्तं स्यात् तत्र का तारतम्यधीः ॥**

जहाँ मानों अग्नि में अग्नि की आहुति देकर या वज्र पर वज्र ढहाकर युद्ध आरम्भ हुआ हो वहाँ किसे छोटा समझा जा सके और किसे बड़ा ॥ ४१ ॥

**जगच्चतुर्दशी तत्र कुहूत्वमिव जिघ्रती ।**
**अकालप्रलयाशङ्कामतनिष्ट चराचरे ॥**

चतुर्दश विश्वों की चतुर्दशी उस समय अमावस बनने जा रही थी, वह चराचर में अकालप्रलय की आशंका जो पैदा कर रही थी ॥४२॥

**पूर्वापरसमुद्रोर्मि–विडम्बि–शरवर्षिणोः ।**
**विग्रहो विग्रहायैव स तयोः समपद्यत ॥**

पूर्व और पश्चिम के समुद्रों की तरंगों जैसे बाण बरसाते उन दोनों पक्षों का युद्ध मानों युद्ध के लिए ही हो रहा था ॥४३॥

**एकस्यैव तु सूर्यस्य प्रभामादाय भास्वतोः ।**
**आदर्शयोस्तु संघर्षे तेजोहानिः क्व जागृयात् ॥**

एक ही सूर्य का प्रकाश लेकर चमकते दर्पणों के युद्ध में तेजोहानि आखिर कहाँ हो ॥ ४४ ॥

**रामरावणयोर्युद्धे जयो रामस्य निश्चितः ।**
**रामराघवयोस्त्वस्मिन् जयः कः कः पराजयः ॥**

राम की जीत तब निश्चित थी जब युद्ध राम और रावण के बीच हुआ था। जहाँ राम का युद्ध राघव से हो रहा हो वहाँ कैसी जीत और कैसी हार ॥४५॥

**अप्राप्तानां शरीरं तु रामलक्ष्मणपुत्रयोः ।**
**सायकानां हि युद्धं तत् परस्परमदृश्यत ॥**

राम और लक्ष्मण के पुत्रों के बाण शरीर तक नहीं पहुँच पाते थे। देखने में तो वह युद्ध बाणों बाणों का ही था ॥ ४६ ॥

**तत्र घातप्रतीघातौ कौशलस्य हि दर्शकौ ।**
**हिंसा वा रक्तपातो वा न मनागप्यदृश्यत ॥**

उस युद्ध में घात और प्रतीघात केवल कौशल के ही प्रदर्शक थे। हिंसा और रक्तपात का तो लेशमात्र भी दिखाई नहीं दे रहा था ॥ ४७ ॥

**एकत्र यज्ञसंरक्षा मदग्लानिः परत्र च ।**
**उद्देश्यं यत्र, युद्धं तच्छस्त्राभ्यासात् परं नु किम् ॥**

जिस युद्ध का उद्देश्य एक ओर यज्ञ की रक्षा हो और दूसरी ओर (शत्रु) मद की शान्ति, वह युद्ध शस्त्राभ्यास से अधिक हो ही क्या सकता था ॥ ४८ ॥

**हृतेऽपि यत्र नाश्वेऽभूदश्वमेधक्षतिः, परम् ।**
**माहात्म्यं तद्धि रामस्य, तस्य वा महतः कवेः॥**

अश्व का हरण होने पर भी अश्वमेध की जो हानि नहीं हुई, यह माहात्म्य केवल भगवान् राम का ही था, या केवल उस आदि कवि का ॥ ४९ ॥

**अथाधिकारमर्यादां वर्णानां संविधानतः ।**
**पातुमुत्प्रेरितोऽमात्यै राजा शम्बूकमीयिवान् ॥**

संकेतः—अधिकारमर्यादा स्वस्वकर्मसंविभागः । संविधानम् धर्मशास्त्रम् । उत्प्रेरितः अत्यन्तं प्रार्थितः ॥ ५० ॥

इसी समय, संविधान के अनुसार अमात्यों द्वारा वर्णों के अधिकारों की मर्यादा रक्षित रखने हेतु प्रेरित राम शम्बूक के पास पहुँचे ॥ ५० ॥

**मुनिवृत्तेरमुं शूद्रं विनिवार्य महामतिः ।**
**उपोद्घातेन तेनैव हयमप्यदिदृक्षत ॥**

महामति राम ने उस शूद्र को मुनिवृत्ति से हटाकर उसी उपक्रम में अश्वमेध के अश्व को भी देखना चाहा ॥ ५१ ॥

**पुष्पकेण क्षणेनैव मनसेव स राघवः ।**
**वाल्मीकिपदमानिन्ये कारुण्याच्छौर्यमागतम् ॥**

त्यों ही मन जैसे ही पुष्पक ने राम को वाल्मीकिजी के आश्रम पहुँचा दिया जो इस समय कारुण्य से शौर्य को प्राप्त हो चुका था ॥ ५२ ॥

**तत्रावतारं रामस्य विविस्वा स महाकविः ।**
**प्रत्युद्ययौ फलैः पुष्पैर्मधुश्च्युद्भिः पदाद् बहिः॥**

महाकवि वाल्मीकि जी वहाँ राम का अवतार होता जान अपने आश्रम से बाहर निकले, अगवानी करने हेतु मधु चुआते फल और पुष्पों द्वारा ॥ ५३ ॥

**द्रष्टृ–दृश्य–द्वयी तत्र पारेसाम्यं व्यवस्थिता ।**
**प्रणिपाताशिषां यत्रोपाधयोऽप्यैक्यसूचकाः ॥**

वह 'द्रष्टा' और 'दृश्य' दोनों की जोड़ी बड़ी अद्वितीय थी, जहाँ प्रणाम और आशीर्वाद की उपाधियाँ भी ऐक्य की ही सूचक थीं ॥ ५४ ॥

**आसीच्च तत्र कैवल्यं द्वयोर्द्वैत-विवर्जितम् ।**
**अतः सीतापि मायेव तदा लेभे न तत् पदम् ॥**

संकेतः—द्वावपि तत्रैकाकिनावेवास्तामिति प्रकृते । अप्रकृतं तु यद् तद् विबुधैः स्वयमुत्प्रेक्ष्यम् ॥ ५५ ॥

वहाँ दोनों में द्वैतविवर्जित कैवल्य था ( दोनों अकेले अकेले ही थे, दोनों के साथ अन्य कोई नहीं था और दोनों की मनोभूमिका द्वैतमुक्त अद्वैत की थी ) इसलिए सीता भी वहाँ उपस्थित नहीं हुई, माया के समान ॥५५॥

**एकस्य चरितं गूढं सूक्ष्ममन्यस्य दर्शनम् ।**
**याथात्म्यमेतयोः को वा परः स्याद् वेदितुं प्रभुः ॥**

संकेतः—परः तयोरन्यः वेत्तुमिति पूर्वपाठे लब्धुम् ॥५६॥

एक का चरित गूढ था और दूसरे का दर्शन। अतः इन दोनों की यथार्थता कोई अन्य कैसे जान सकता था ॥५६॥

**कैवल्यधाम्नि तस्मिंस्तु काव्यपुंसे कविर्निजम् ।**
**काव्यं समर्पयामास बिम्बाय प्रतिबिम्बवत् ॥**

कवि ने उस कैवल्य धाम ( एकान्त और मुक्ति स्थान ) में काव्य पुरुष (काव्य-नायक श्रीराम ) को अपना काव्य समर्पित किया, बिम्ब को प्रतिबिम्ब के समान ॥५७॥

**सोऽपि तस्मिन् निजं रूपं प्रत्यभिज्ञाय पूरुषः ।**
**तद् युद्धं तच्च कौलीनमात्मपूजाममन्यत ॥**

उस पुरुष ने भी इस काव्य में अपने स्वरूप की प्रत्यभिज्ञा कर उस युद्ध और उस जनापवाद को अपनी पूजा ही समझा ॥५८॥

**कृतार्थसंविदोः पश्चादपरां भूमिमीयुषोः ।**
**सूनुपक्षद्वयी पक्षौ तयोरास्तां महीयसोः ॥**

संकेतः—वाल्मीकिः कुशलवपक्षमासेदिवान्, रामश्च चन्द्रकेतुपक्षमिति भावः ॥५९॥

परा भूमिका पर पहुँचकर उन दोनों अतिमहान् पुरुषों की संवित्ति जब कृतकृत्य हो गई और उसके पश्चात् वे दोनों लोककी अपरा भूमिका पर आ पहुँचे तब उनके पृथक्-पृथक् दो दल हो गए, वे ही दो जो उनके बच्चों के थे [ राम चन्द्र-केतु के दल में चले गये और वाल्मीकि कुश लव के दल में ] ॥५९॥

**कविरेकत्र, काव्यं च तस्यैवान्यत्र, तत्र कः ।**
**पक्षो वाथ विपक्षो वा जयो वा यदिवाऽजयः ॥**

संकेतः—राम एवात्र काव्यत्वेनाध्यवसितः। रामायणस्य तन्मात्रशब्दरूप-त्वात् ॥६०॥

एक ओर था कवि और दूसरी ओर था उसीका काव्य। वहाँ कौन पक्ष और कौन विपक्ष, अथवा क्या जय और क्या पराजय ॥६०॥

**स्व-स्व-पूज्य-प्रणामाय त्यक्तसंरम्भयोर्द्वयोः।**
**शिशूनां पक्षयोस्तत्र संघर्षो विनयेऽप्यभूत् ॥**

युद्धसंरम्भ छोड़कर अपने-अपने पूज्यों को प्रणाम करने में लगे उन बालकों का संघर्ष विनय दर्शन में भी हो रहा था ॥६१॥

**चक्षुषे कृतवान् सूर्यः प्रणामं हन्त तत्क्षणे।**
**स्वप्रकाश-प्रकाशाय रामो यत् कवयेऽनमत् ॥**

**संकेतः**—प्रकाशयतीति प्रकाशः प्रकाशकः। चक्षुर्विना सूर्यप्रकाशस्या-प्रकाशनात् तत् तस्य प्रकाशकम्। एवमेव रामस्यापि कविः ॥६२॥

उस क्षण मानों अपने प्रकाश के प्रकाशक चक्षु को सूर्य ने प्रणाम किया, श्रीराम ने जो महाकवि वाल्मीकि को प्रणाम किया ॥६२॥

**ऐकात्म्यमात्रसाम्राज्यं यत्र जागर्त्ति संविदाम्।**
**तत्राजयो हि पुण्ड्रेक्षुर्जय एव महाकटुः ॥**

**संकेतः**—पुण्ड्रेक्षुस्तन्नामा सर्वोत्कृष्ट इक्षुभेदः। महाकटुः अत्यन्तं कटुः निम्बश्च।

जहाँ संवित्तियों की एकता का साम्राज्य हो वहाँ हार ही उत्तम ईख होती है और जीत ही कड़वी नीम ॥६३॥

**सत्काव्यस्य महावाक्यं नीतेर्मन्त्राक्षरं नु वा।**
**स कविः स च काव्यात्मा मेने तान् वीरबालकान्॥**

**संकेतः**—काव्यात्मा रामः ॥६४॥

उस कवि और उस काव्यात्मा ( राम ) ने उन वीर बालकों को सत्काव्य का महावाक्य या नीति का मन्त्राक्षर माना ॥६४॥

**पूज्ययोरेकतां दृष्ट्वा बाला अप्येकतां ययुः।**
**अभिन्नत्वे समुद्राणां को नु भेदस्तदूर्मिषु ॥**

बच्चों ने अपने पूज्यों में एकता देखी तो वे भी एक हो गए। समुद्रों के एक हो जाने पर उनकी तरंगों में भेद कैसा ॥६५॥

**अन्योन्यभुजवीर्यं ते पूजयित्वास्त्रदैवतैः।**
**इदानीं मिश्रयामासुः परीरम्भापदेशतः ॥**

अस्त्रप्रयोग से एक दूसरे के बाहुबल को पूजा कर अब उन्हें उन बालकों ने मिश्रित कर दिया, आलिङ्गन के बहाने ॥ ६६ ॥

**एतेषां वक्षसां घर्षे वज्रग्राव्णां यथाऽऽर्यभूः ।**
**उच्छश्वास, सदा वीरमैत्र्यां राष्ट्रं निषीदति ॥**

जब ये बच्चे मिले और वज्र की चट्टानों जैसे इनके वक्षःस्थल आपस में रगड़ाए तो भारतभूमि ने संतोष की साँस ली, क्योंकि राष्ट्र, सदा ही वीरों की मैत्री पर ही निर्भर रहता है ॥ ६७ ॥

**रामो लवकुशौ, तौ च रामं ज्ञात्वापि रूपतः ।**
**तत्त्वतः पर्यचिन्वन्नो तदानीं कव्यनीहया ॥**

**संकेतः**—कविर्वाल्मीकिः । स च सद्गुरुरूपः । तदनुग्रहं विना जीवस्य परमात्मसाक्षात्कारासंभवः । अयं विशेषो यदत्र परमात्मापि कविकृपां विना जीवं प्रत्यभिज्ञातुं न प्रभवति ॥ ६८ ॥

राम लवकुश को और वे राम को तब तक स्वरूपतः जानकर भी तत्त्वतः नहीं जान पाए थे, कवि की अनिच्छा से ॥ ६८ ॥

**अबोधपूर्वमात्मैक्यं स्मरन्तः सर्व एव ते ।**
**प्रसादमपि चेतःसु विषादोन्मिश्रमादधुः ॥**

**संकेतः**—अबोधेति यथोक्तं महाकविना "तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि"—इति शाकुन्तले ॥ ६९ ॥

किन्तु तीनों अपनी आत्मा की एकता का अबोधपूर्वक स्मरण कर रहे थे और प्रसन्नता में किसी विषाद का स्पर्श लिए हुए थे ॥ ६९ ॥

**कविरथ महान् वीरैस्तैरात्मजैः परिवारितं**
**रघुपरिवृढं रामं धाम स्वकं खलु नीतवान् ।**
**जनकतनया ज्ञात्वाप्येतद् बभूव पराङ्मुखी**
**न खलु वशिनां त्यक्ते वस्तुन्युदेति पुना रतिः ॥**

**संकेतः**—त्यक्तं वस्तु श्रीरामस्य स्थूलं वपुः ॥ ७० ॥

अब वह महान् कवि उन वीर आत्मजों के साथ श्रीराम को अपने आश्रम ले गए । सीता यह सब जानकर भी पराङ्मुख ही रही । वशी जनों में त्यक्त वस्तु के प्रति फिर से आसक्ति पैदा नहीं होती ॥ ७० ॥

बलमपि च तदानीं जृम्भकास्त्रस्य मोक्षाद्
घनतुहिनविमोक्षाल्लोकवद् दीप्तिमापत् ।
अथ च तुरगलाभाद् दृष्टमप्यत्र घोरं
प्रधनममनुतैतत् स्वप्नवृत्तान्तमात्रम् ॥

घने कुहासे के हट जाने से लोक की भाँति जृम्भकास्त्र के हट जाने से सेना भी स्वस्थ हो गई। और उसने उस घोर युद्ध को भी स्वप्नमात्र की घटना माना, क्योंकि उन्हें अश्व की प्राप्ति हो चुकी थी ॥ ७१ ॥

इति सनातनोपाह्व--श्रीरेवाप्रसादद्विवेदिकृतौ
'उत्तरसीताचरित'-नाम्नि सर्गबन्धे कुमारायोधनं
नामाष्टमः सर्गः ॥ ८ ॥

❀

# नवमः सर्गः

**अथ प्रभाते गुरुणा समेता रामस्य सर्वाः ससुता जनन्यः ।**
**स चापि राजा जनकः कवीन्द्र-संकल्पतस्तस्य पदं प्रपन्नाः ॥**

महाकवि ने संकल्प किया और तत्फलस्वरूप भरत तथा लक्ष्मण को लेकर गुरु वसिष्ठ के साथ राम की सभी माताएँ एवं वे विदेहराज जनक भी वाल्मीकि आश्रम जा पहुँचे दूसरे दिन सबेरे ॥ १ ॥

**त्रिभिर्मुनीन्द्रैस्तिसृभिश्च सूभिर्वृतो बभासे पुरुषोत्तमोऽत्र ।**
**यथा त्रिवेण्या सहितः प्रयागस्त्रिभिः समुद्रैश्च यथैव देशः ॥**

संकेतः—पुरुषोत्तमः श्रीरामः चूलिकाक्रमेणोपमायोजनायां न दोषः ॥ २ ॥

वाल्मीकि आश्रम से तीनों महामुनियों (वसिष्ठ, जनक तथा वाल्मीकि) तथा तीनों माताओं के बीच वे पुरुषोत्तम राम ऐसे लग रहे थे जैसा त्रिवेणी और तीन समुद्रों से युक्त यह देश लगता है ॥ २ ॥

**आसीद् विदेहाधिपतेः सुता तु तथा तटस्था निखिलेषु तेषु ।**
**यथा विलीनात्मनि राजहंसी यद्वापि गीः कापि परा स्वपुंसि ॥**

संकेतः—आत्मनि स्वरूपेऽपि, हंसशब्दस्य युक्तयोगित्वसूचकत्वमपि । परावाचः पुरुषव्यतिरिक्तत्वाभावाभिमानात् ॥ ३ ॥

किन्तु, उन सबके प्रति सीता तटस्थ थीं । वे ऐसी लग रही थीं जैसी आत्मा में विलीन राजहंसी (हंस = युक्तयोगी भी) या अपने स्वरूपभूत पुरुष में परा वाक् लगा करती है ॥ ३ ॥

**क्व द्वेषरागौ क्व च लोभमोहौ क्व क्रोधकामौ मदमत्सरौ वा ।**
**यदात्मलाभे परमात्मसंज्ञं ज्योतिः परं किंचिदुदेति पुंसि ॥**

कहाँ रागद्वेष, कहाँ लोभमोह, कहाँ कामक्रोध और कहाँ मदमत्सर, जब आत्मलाभ हो जाने पर व्यक्ति में परमात्मरूपी वह कोई पर ज्योति उदित हो जाती है ॥ ४ ॥

**न देहभेदेन विभिद्यते स्वं विभिद्यते यच्च तदस्ति न स्वम् ।**
**स्वनाम्नि भूम्नि स्थितिमान् बिभेति न वा वियोगान्न च देहपातात् ॥**

जो 'स्व = आत्मतत्त्व' है, उसमें शरीर की भिन्नतासे भिन्नता नहीं आती, और जिसमें भिन्नता आती है वह 'स्व = आत्मतत्त्व' नहीं होता। जो कोई 'स्व'-नामक भूमातत्व में अवस्थित हो जाता है वह न वियोग से डरता और न तो शरीरपात (मृत्यु) से ही ॥ ५ ॥

**सा हन्त विद्वत्परिषत् तदानीं ज्ञानस्य भक्तेरथ कर्मणोऽपि ।**
**योगत्वलाभादिह भारतीयमात्मानमुद्भासयति स्म पूर्णम् ॥**

संकेतः—ज्ञानभक्तिक्रियायोगत्रितयसामञ्जस्यमेव भारतीयत्वम्। आत्मा व्यक्तित्वमिति लोके प्रसिद्धम् ॥ ६ ॥

क्या कहना है उस परिषद् का। वह ज्ञान, भक्ति और कर्म तीनों में योगत्व लिए थी और इसीलिए भारत के अपने संपूर्ण व्यक्तित्व को उद्भासित कर रही थी ॥ ६ ॥

**वाल्मीकिराहूत-समस्त-सेना-जनस्ततस्तत्र वनाधिदेवैः ।**
**उपास्यमानं फलमूलकन्द-मधु-प्रसूनैर्विदधे समाजम् ॥**

संकेतः—समाजो महती सभा ॥ ७ ॥

तब वाल्मीकिजी ने सभी सैनिकों को भी बुलाया और एक विशाल सभा का आयोजन किया, जिसमें स्वागत कर रही थीं वनदेवियाँ, कन्द, मूल, फल और मधुवर्षी फूलों से ॥ ७ ॥

**अध्यक्षतां श्रीजनकोऽत्र चक्रे परावरप्रत्यय-निश्चितार्थः ।**
**य आबभासे मुनिभिर्वृतोऽत्र यथात्मयोनिर्दिवि नारदाद्यैः ॥**

(लोकसभा जैसी) उस सभा की अध्यक्षता की जनकजी ने, उन्हें पर और अवर का विवेक था इसलिए अर्थनिश्चय में वे अतीव कुशल थे। उनके आस-पास मुनिजन बैठे हुए थे और उनके बीच वे ऐसे लग रहे थे जैसे नारद आदि महर्षियों के बीच ब्रह्माजी लगा करते हैं द्युलोक में ॥ ८ ॥

**मध्येसभं तत्र च भूर्जपत्रैर्वृतं महत् स्थण्डिलमेकमासीत् ।**
**यत्पार्श्वभागे वनदेवतानामासीत् समाजो मधुवर्षिणीनाम् ॥**

और, उस सभा के बीचों बीच एक ऊँची वेदिका बनी हुई थी। वह चारों ओर से भूर्जपत्रों से ढँकी थी और उसके चारों ओर मधुवर्षा करती हुई वनदेवियों का समाज था ॥ ९ ॥

**किमेतदस्तीति तु तत्र कश्चित् प्रष्टुं कविं नो चकमे समाजे ।**
**आप्तेषु वाचां प्रसरः क्रमेषु न भारतीयैरुपधीयते यत् ॥**

किन्तु उस समाज में किसी ने भी पूछना नहीं चाहा कि 'यह क्या है'। कारण कि भारतवर्ष के लोग आप्त कार्यों में वाणी का स्थान नहीं देते ॥ १० ॥

**कुतूहलाक्रान्तहृदां च तेषामतीव विस्फारितलोचनानाम् ।**
**औत्सुक्यमासीत् प्रपतन्नु सौम्यात् पक्ष्माग्रभागात्, कमलान्नु भृङ्गः ॥**

उनके हृदय कुतूहल से आक्रान्त थे और अतीव विस्फारित नेत्र वाले उनका औत्सुक्य पलकों की कोर से मानों गिरा पड़ रहा था, कमल की कोर से भौंरें के समान ॥ ११ ॥

**मुखेषु मौना अपि ते तदानीं मनःसु चाञ्चल्यभृतो विरेजुः ।**
**सरोवरा यद्वदनुत्तरङ्गाः परन्तु मध्ये चलमीनसङ्गाः ॥**

मुख से मौन होने पर भी मन से चञ्चल वे उस समय ऐसे लग रहे थे जैसे भीतर चञ्चल मीनों से युक्त सरोवर लगते हैं, तरंगों के शान्त रहने पर ॥१२॥

**अत्रास्ति नेता कविरेव, रामो भूत्वापि नेतास्ति विनेय एव ।**
**का नाम शक्तिः परमेश्वरस्य जगत्प्रसिद्ध्यै निगमेतरस्य ॥**

संकेतः—निगमा वेदाः, तेभ्य इतरस्य भिन्नस्य। भिन्नत्वं च तदप्रमाणकत्वेन ॥ १३ ॥

इस सभा में नेता का पद कवि को ही प्राप्त था, और राम नेता होते हुए भी यहाँ विनेय अनुयायी ( follower ) हो थे। परमेश्वर की क्या मजाल कि वह जगत्प्रसिद्धि ( निर्माण और प्रसिद्धि ) में समर्थ हो सके, वेद से हटकर ॥ १३ ॥

**मौनेऽपि लीलां कवितुर्वसिष्ठो नासीत् तदानीं न हि संविदानः ।**
**परार्धपाथोधितिमिङ्गिलानां किं वा परोक्षं कविपुङ्गवानाम् ॥**

संकेतः—कवितुः कवेः वाल्मीकेरिति यावत्। संविदानः प्राप्नुवानः विद्लृ लाभे कानच्। प्राप्तिश्च ज्ञानरूपा। परार्धम्, मायोत्तरमर्धम्, मायिकस्यार्धस्य पूर्वार्धत्वेन प्रतिपन्नत्वात्। तत्र तिमिङ्गिला महामत्स्याः तदवगाहनशौण्डाः। कविः क्रान्तसाक्षात्कारी, तेषु पुङ्गवाः श्रेष्ठाः ॥ १४ ॥

उस समय वसिष्ठ चुप थे। परन्तु वे कवि की लीला नहीं समझ रहे थे ऐसा न था। कवि परार्धपाथोधि के तिमिंगिल होते हैं। उनकी आँखों से ओझल हो ही क्या सकता है ॥ १४ ॥

**ता मातरस्ते च चमूचरेन्द्रास्ते वा मुनीन्द्रा स च रामचन्द्रः ।**
**सभासदो यत्र परात्पराः सा सभा क्व भूता क्व च संभवित्री ॥**

वे माताएँ, वे सेनानायक, वे सैनिक वीर, वे महामुनीन्द्र और वे भगवान् राम जिसमें परात्पर-सभासद् थे ऐसी सभा कब हुई और कब होगी ॥ १५ ॥

**अथोदतिष्ठत् कुशपूतपाणिर्निजासनात् कारुणिकः कवीन्द्रः ।**
**यः क्रौञ्चशोके कृतवान् दयां च निषादकं चाप्यभिशप्तवांश्च ॥**

संकेतः—एतेन कवेरपि समाजे सक्रियतोक्ता ॥ १६ ॥

अब कुशपूतपाणि कारुणिक कवीन्द्र अपनी आसन से उठे। ये वे ही थे जिन्होंने क्रौञ्च के शोक पर करुणा की थी और दुष्ट निषाद को शाप भी दिया था ॥ १६ ॥

**तमुत्थितं वीक्ष्य विनिर्मितं च तत् स्थण्डिलं सभ्यजनान्तरङ्गम् ।**
**दोग्धारमायान्तमवेक्ष्य गां च वत्सो यथातीव समुच्चचाल ॥**

संकेतः—तं वाल्मीकिम् ॥ १७ ॥

एक ओर उन्हें खड़ा देखा और दूसरी ओर सभा के बीच बने उस स्थण्डिल को तो सभासद् लोगों का चित्त एक ओर दोग्धा को आते और दूसरी ओर गाय को देख बछड़े के समान अतीव चञ्चल हो बैठा ॥ १७ ॥

**दर्भासने पिङ्गरुचि स्थितः स प्राचेतसो भास्वरदिव्यदेहः ।**
**मेरोः शिलायामुषसि स्थितस्य बभार कान्ति रविमण्डलस्य ॥**

उस पीले रंग की आसन पर खड़े हुए भास्वरदिव्य देह प्राचेतस ( वाल्मीकि ) ऋषि प्रभातकाल में सुवर्णगिरि मेरु की शिला पर स्थित सूर्यबिम्ब की कान्ति [ शोभा और तेज ] धारण किए हुए थे ॥ १८ ॥

**श्रीशारदायाः स्फटिकाक्षमालामिव प्रसन्नां स ततः कवीन्द्रः ।**
**विशुद्धतर्कां च विनिश्चितां च च्छन्दस्वतीं वाचमिमामुवाच ॥**

अब वे कवीन्द्र श्रीशारदा की स्फटिकाक्षमाला जैसी प्रसन्न विशुद्धतर्का निश्चितार्था और छन्दस्वती यह वाणी बोले—॥ १९ ॥

**यज्ञेन देहानलभन्त विश्वे भावा रयिप्राणवशंवदेन ।**
**अनुक्रियां तस्य विधित्सुरेष रामोऽश्वमेधं तनुते यदीह ॥**

संकेतः—'मिथुनमेतत् प्रजननं कुरुते रयिश्च प्राणश्चेति' वेदवाक्यात्, "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः, अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुगि"—त्यादिभिः स्मृतिवचनैश्च यज्ञस्य रयिप्राणात्मकत्वं सृष्टिमूलत्वं च न न प्रतीतम्। अस्मदादिभिः क्रियमाणस्तु यज्ञस्तस्यैव भगवतः प्रकृतियज्ञस्यानुक्रियेति संप्रदायवेत्तारः ॥ २० ॥

रयि और प्राण पर निर्भर यज्ञ से सभी पदार्थों के शरीर बने हैं, यदि उसका अनुकरण करते हुए श्रीराम यह अश्वमेध करने चले हैं तो—॥ २० ॥

**तदर्थमेते वयमत्र साधुवादाशिषां वृष्टिमुदीरयामः ।**
**परन्तु सम्यक्त्वविनिश्चयाय सभ्यानिमान् वो विनिवेदयामः ॥**

संकेतः—सम्यक्त्वविनिश्चयः प्रामाण्यग्रहः ॥ २१ ॥

उसके लिए हम इन पर साधुवाद और आशीर्वाद की वृष्टि करते हैं, किन्तु यह जानने के लिए कि यह अनुष्ठान ठीक से हो रहा है या नहीं, हमारा आप सब सभ्यों से निवेदन है कि—॥ २१ ॥

**किं प्राणमात्रेण रयिं विनास्य चराचरस्यास्ति वपुःप्रसिद्धिः ।**
**यद्वाग्निमात्रेण विहाय सोमं ब्रह्माण्डपिण्डं प्रथतेतरां किम् ॥**

संकेतः—वपुःप्रसिद्धिः स्थूलशरीरनिर्वृतिः । चितिरूपमिदं स्थूलपिण्डजातं रयिप्राणरूपाभ्यामग्नीषोमाभ्यामेव जायते ॥ २२ ॥

क्या रयि के बिना केवल प्राणमात्र से इस चराचर का शरीर बन सका है, अथवा सोम को छोड़कर केवल अग्निमात्र से यह ब्रह्माण्डपिण्ड तैयार हो सका है ॥ २२ ॥

**नैवेति चेद् यज्ञविधौ रयित्वं तथा व सोमत्वमुपाश्रयन्तीम् ।**
**विहाय पत्नीं यजतोऽश्वमेधविडम्बनेयं न विडम्बना किम् ॥**

संकेतः—विडम्बना अनुकरणम् । विडम्बना अनुकरणाभिनयः ॥ २३ ॥

यदि नहीं तो यज्ञ कार्य में रयि और सोम का कार्य करती ( यजमान ) पत्नी को छोड़कर यज्ञ कर रहे श्रीराम का यह यज्ञानुष्ठान क्या कोरी विडम्बना नहीं है ॥ २३ ॥

**यद्यस्ति हेम्नः प्रतिमां विदेहपुत्र्याः प्रतिष्ठाप्य कृतः समाधिः ।**
**विचार्यतां तत्र, कृतोऽपराधः स्वयं तथा को नु विदेहपुत्र्या ॥**

यदि सीता की सुवर्णप्रतिमा प्रतिष्ठित कर समाधान कर लिया हो, तो सोचिये कि स्वयं उस सीता ने क्या अपराध किया था ॥ २४ ॥

**श्यामायते यन्न कृतेऽपि दाहे तदेव हेमात्र निगद्यते चेत् ।**
**रक्षःकपीन्द्रत्रिदिवौकसां किं साध्यक्षमासीदनले न शुद्धा ॥**

सुवर्ण उसी का न नाम है जो जलाने पर भी श्याम न पड़े ? तो सीता क्या

(विभीषण आदि) राक्षसों (सुग्रीव आदि) वानरों और (इन्द्रादि) देवताओं के सामने अग्निपरीक्षा में शुद्ध सिद्ध नहीं हुई थीं ॥ २५ ॥

**सा चेद् विशुद्धापि जनापवादाद् वज्रात् सबीजा धरणीव सीता ।**
**हेम्नः सजीवा प्रतिमा विनाशमनायि दोषेषु सहस्रनेत्रैः ॥**

संकेतः—इन्द्रो हि कुपितः सन् सबीजां धरित्रीं वज्रेण हिनस्ति । तद् यथाऽनुचितं तथैव सीतायाः परित्यागोऽपीत्यर्थः । सहस्रनेत्र इन्द्रोऽपि ॥ २६ ॥

उस सुवर्ण की ही सजीव प्रतिमासी शुद्ध साध्वी को भी यदि जनापवाद के कारण गर्भावस्था में भी वज्र ( बिजली ) गिराकर बोई हुई खेती की नांई दोष दर्शन में हजार नेत्र वालों द्वारा विनष्ट कर दिया गया—॥ २६ ॥

**तदद्य तस्या गतचेतनायाः किं शालभञ्ज्या अपि संग्रहेण ।**
**अशुद्धसत्त्वस्य मुखं जनस्य न चित्रकर्मण्यपि वीक्षणीयम् ॥**

संकेतः—गतचेतनेति शालभञ्जीविशेषणतया नेयम् । चित्रकर्म मूर्त्तिः, विष्णुधर्मोत्तरे चित्रसूत्राध्याये तथादर्शनात् ॥ २७ ॥

तो आज उसकी निर्जीव पुतली को भी अपनाने से क्या । मलिन प्राणी का चेहरा तो उसके चित्र (फोटू और मूर्ति) में भी नहीं देखा जाना चाहिए ॥ २७ ॥

**यद्यस्ति संप्रत्यतिमात्रधन्या, 'सीतास्ति शुद्धे'–ति मतिस्तदाद्य ।**
**सा ह्येव पूर्वं निखिलैर्गवेष्या 'सती न देशेऽत्र विपद्यते यत्' ॥**

संकेतः—अत्र देशे भारते, वाल्मीकिजनपदेऽपीति च ॥ २८ ॥

यदि अब इतने दिनों के पश्चात् आप लोगों में यह सुमति जागी है कि 'सीता शुद्ध है' तो आप सबको चाहिए कि आप उस ( सीता ) को ही खोजें । क्योंकि इस देश ( भारत और आश्रम ) में सती का नाश नहीं माना जाता, न तो होता ॥ २८ ॥

**सा ह्येव विश्वम्भरयज्ञपूर्त्यै विश्वम्भराया दुहिताद्य पूज्या ।**
**सा का नु पूजा सुरभेर्विधिज्ञाः ! या सौरभेय्याः क्षतजैः क्रियेत ॥**

संकेतः—यज्ञ एव विश्वम्भरः, पृथ्वी च भगवती विश्वम्भरा, तस्या अपि यज्ञरूपत्वात् । यथा चैतत् तत् वेदविद्भिर्न नावगम्यते । सुरभिः कामधुक् सौरभेयी च तस्या अपत्यं स्त्री गोमात्रम् । क्षतजं रुधिरम् । पृथिवीरूपस्य यज्ञस्य पूर्त्यै पृथिव्या एव पुत्र्याः सीतायाः परित्यागस्तथाविध एव ॥ २९ ॥

इस विश्वम्भरयज्ञ की पूर्त्ति के लिए उसी विश्वम्भरा ( पृथिवी ) की पुत्री

को महत्त्व दिया जाना चाहिए। आप विधिज्ञ हैं, कामधेनु की भला वह कैसी पूजा जो उसकी ही बछिया के रक्त से की जाये ॥ २९ ॥

**महार्थमेवं स निवेद्य सभ्यान् वाग्मी कवीन्द्रो विरराम वाग्भ्यः।**
**आवश्यकाद् योऽभ्य धिकं ब्रवीति स शारदायाः कुरुतेऽवमानम् ॥**

इस प्रकार पर्याप्त महत्त्वपूर्ण तथ्य प्रकट कर उत्तम वक्ता वाल्मीकि ने भाषण समाप्त कर दिया। जो आवश्यक से अधिक बोलता है वह सरस्वती का अपमान करता है ॥ ३० ॥

**सा वाग् बभूवाश्रु वसिष्ठनेत्रे द्रुतिर्विदेहाधिपचेतनायाम्।**
**रामे विसंज्ञत्वमथापरेषु सीतापुनःप्राप्तिकृतेऽतितृष्णा ॥**

वाल्मीकि की वह वाणी वसिष्ठ जी के नेत्रों में आँसू बन कर प्रकट हुई, जनक जी के चित्त में द्रुति बनकर, राम में मूर्छा बनकर और अन्य सब सभासदों में सीता की पुनः प्राप्ति के लिए उत्कट तृष्णा बनकर ॥ ३१ ॥

**तदन्तरात्मस्वनुभूय तीव्रं लोकस्य सीताधिगमोत्सुकत्वम्।**
**वसिष्ठनामा स महामुनीन्द्रो महाकवीन्द्रं प्रणयादवोचत् ॥**

उस समय समाज की अन्तरात्मा ने सीता जी को प्राप्ति के लिए तीव्र उत्सुकता का अनुभव किया तो वसिष्ठ नामक महामुनीद्र वाल्मीकि जी से प्रेमपूर्वक बोले ॥ ३२ ॥

**महाकवे ! संप्रति ते नियोगं दधामहे मूर्ध्नि यथा विधातुः।**
**चराचरं ते प्रतिभेन्दुमूर्त्तिः प्रकाशमर्कस्य यथा व्यनक्ति ॥**

संकेतः—इन्दुमूर्त्तिः अर्कस्य प्रकाशमिवेति वास्तविकस्य कलास्पर्शेन सौम्यतालाभं प्रतिपादयितुम्, सूर्यप्रकाशस्य चन्द्रद्वारा सौम्यतासंपादनात् ॥ ३३ ॥

महाकवे ! आपकी आज्ञा हम शिर पर धारण करते हैं विधाता की आज्ञा के समान। आपकी प्रतिभा सूर्य के प्रकाश को चन्द्रमा की नांई इस चराचर को अभिव्यक्त करती रहती है ॥ ३३ ॥

**मृषा न ते दर्शनमस्ति विद्वन् संकल्पमात्रं तव कल्पवृक्षः।**
**सत्यं भवांस्तत् कुरुतां स्ववाक्यं 'सीता स्वदेशेऽत्र सुरक्षिते'ति ॥**

और हे विद्वन्, (आप सर्वज्ञ हैं) आपका दर्शन मृषा नहीं है। आपका केवल संकल्प ही है कल्पवृक्ष। इसलिए आप अपने इस वाक्य को सत्य सिद्ध कीजिये कि 'इस स्वदेश (आश्रम और भारत) में सीता सुरक्षित हैं' ॥ ३४ ॥

**लोकप्रवाहोऽयमुदात्तचित्तैर्वृक्षैस्तटस्थैरिव विज्ञ ! विज्ञैः ।**
**कृपाप्रसूनान्यभिवर्ष्य सूरे ! सुगन्धनीयः स्वरसप्रवृत्तः ॥**

संकेतः—नदीप्रवाहस्तटस्थितस्य वृक्षस्य शिखरं न स्पृशति, वृक्षः स्वयमेव तं पुष्पाण्यभिवर्ष्य सुगन्धयति ॥ ३५ ॥

उदात्त-चित्त और विज्ञ जन इस अपनी गति में प्रवाहित लोकप्रवाह को तो, हे विज्ञ, नदीप्रवाह को तटपर स्थित वृक्ष की भाँति स्वयं ही कृपाप्रसून की वर्षा कर करके सुगन्धित करते रहते हैं ॥ ३५ ॥

**इत्येवमामन्त्र्य विदांवरोऽसौ सरस्वतीं स्वामकरोदशब्दाम् ।**
**मितं न यद् यच्च न हन्त सारं विग्लापनामात्रमिदं हि वाचः ॥**

इस प्रकार संकेत की भाषा में कुछ कहकर अत्युत्कृष्ट विद्वान् वसिष्ठ ने अपनी सरस्वती को अशब्दा बना दिया । जो मित न हो और सारपूर्ण न हो वह तो अपनी वाणी का विग्लापनमात्र है ॥ ३६ ॥

**कविश्च सूक्तेः परमार्थबोधे प्रतिष्ठितं वीक्ष्य मुनिं जहर्ष ।**
**ध्वनिस्मृति यत् सुहृदां मुनीनां विना न सूक्तं सफलं कवीनाम् ॥**

संकेतः—सूक्तं वेदमन्त्रः, काव्यं च, तदुभयं सहृदयग्राह्यं ध्वनिं मुनिग्राह्यमर्थं च विना विफलम् ॥ ३७ ॥

कवि ( वाल्मीकि ) ने भी अपनी सूक्ति के परमार्थ ज्ञान में मुनि ( वसिष्ठ ) को प्रतिष्ठित देखा तो उन्हें बड़ी ही प्रसन्नता हुई, क्योंकि कवियों ( ऋषियों ) के सूक्त ( वेदमन्त्र और उत्तम काव्य ) उसकी ध्वनि को पकड़कर चलने वाली स्मृतियों ( मनु आदि के धर्मशास्त्र और सहृदय की संवादिनी प्रज्ञा ) के विना सफल नहीं हो पाते ॥ ३७ ॥

**लोकोऽपि मैत्रावरुणस्य मान्यं प्रस्तावमेतं स्वहृदाभ्यनन्दत् ।**
**अब्धेः स्वभावः स यदेष चान्द्रं प्रकाशमन्वेति विना विकल्पम् ॥**

लोक ने भी मैत्रावरुण ( वसिष्ठ ) के इस मान्य प्रस्ताव का समर्थन हृदय से किया । समुद्र का तो यही स्वभाव है कि वह चन्द्र के प्रकाश का अनुवर्त्तन करता ही है, विना विकल्प के ॥ ३८ ॥

**मुनेर्नियोगं जनतानुरोधं स्वभावनां चापि ततः समर्च्य ।**
**राज्ञो मुखं नीरदचातकीयां प्रसूय शोभां कविरालुलोके ॥**

संकेतः—चातकीयं लोकप्रतिनिधिः न तु याचकमात्रम् ॥ ३९ ॥

मुनि ( वसिष्ठ ) की आज्ञा, जनता के अनुरोध और अपनी स्वयं की भावना का आदर कर कवि ( वाल्मीकि ) ने राजा ( राम ) के मुख की ओर देखा जैसे नीरद ( मेघ ) की ओर चातक देखता है ॥ ३९ ॥

**न वाङ् न लेखो न सखा न चान्यन्निवेदनाय स्वहृदस्तदानीम् ।**
**उपाजि राज्ञापि सुमानुषेण बाष्पप्रवर्षेण तु सर्वमूचे ॥**

राम ने भी उस स्थिति में अपना हृदय स्पष्ट करने हेतु न तो वाणी को अपनाया, न लेख को, न मित्र को और न किसी अन्य वस्तु को। वे तो थे समानुष ( हृदय के धनी गृहस्थ ); उन्होंने आँसू बहाकर ही सब कुछ कह दिया ॥४०॥

**सीतावपुर्मात्रमनेन मुक्तं पुराऽनुरोधाज्जनभावनायाः ।**
**बुद्धिप्रधाना न हि सूर्यवंश्या देहेऽनुषक्तिं दधतीन्द्रियार्थे ॥**

"श्रीराम ने सीता के शरीरमात्र का परित्याग किया था जनता की भावना का आदर कर। ठीक भी है, सूर्यवंशी लोग बुद्धिप्रधान होते हैं। वे इन्द्रियों के संतर्पण के लिए अपेक्षित शरीर पर आसक्ति नहीं रखते" ॥ ४१ ॥

**गर्भं प्रजायै गृहमेधयाजी निषिच्य जायां भजते यदर्थम् ।**
**स एव सेवावसरोऽस्य हस्ताद् विच्यावितस्तेन हि दूयतेऽसौ ॥**

दुखी तो ये इसलिए हो रहे हैं कि केवल प्रजा ( सन्तति और जनता ) के लिए गृहमेध में दीक्षित गृहस्थ गर्भनिषेक करके भी अपनी जाया को जिस लिए पास रखता है वह जो उसकी सेवा थी उसी का सुअवसर इनके हाथ से निकल गया ॥४२॥

**इत्यादिभिर्नैकविकल्पनाभी रामाश्रु लोकान् नितराममथ्नात् ।**
**परस्य शोकः परचेतनायां कारुण्यमूर्त्या परिवर्त्तते हि ॥**

राम के आँसुओं ने इस प्रकार की अनेक कल्पनाओं से उस समाज को मथ डाला। ठीक ही है। दूसरे का शोक दूसरे की चेतना में करुणा ही बनकर प्रकट होता है ॥ ४३ ॥

**वाल्मीकिरप्यान्तरतस्थमेक्ष्य स्वसंविदा सर्वजनस्य तत्र ।**
**संकेतयामास वनाधिदेवीर्मध्येसभं स्थण्डिल रक्षयित्रीः ॥**

वाल्मीकिजी ने देखा कि जो वे चाहते हैं वही वहाँ सब चाह रहे हैं तो सभा के मध्य भाग में बने उस स्थण्डिल की पूजा में निरत वनदेवियों को इशारा कर दिया ॥ ४४ ॥

**ताश्चापि भूर्जावरणं शमादिप्रवृत्तयस्तामसमान्तरं नु ।**
**शनैः शनैर्दूरयितुं प्रवृत्तास्तत्त्वस्य गूढस्य निरूपणार्थे ॥**

और उनने भी जैसे शम दम आदि की प्रवृत्तियाँ अज्ञान के तम को दूर करती हैं उसी प्रकार ( स्थण्डिल पर पड़े ) उस भूर्जपत्र के आवरण को धीरे-धीरे दूर करना आरम्भ किया, निगूढ तत्त्व के निरूपणार्थ ॥ ४५ ॥

तस्मिन् क्षणे लोकमनांसि यज्ञकुण्डे पतङ्गा इव तत्र पेतुः ।
तेषु स्थविष्ठस्य शरीरकस्य महत्वबुद्धिर्न मनागशेषि ॥

उस क्षण लोगों के मन उस स्थण्डिल पर इस प्रकार टूटे जिस प्रकार दीपक पर शलभ टूटा करते हैं । उन लोगों में स्थूल शरीर के प्रति महत्त्वबुद्धि तनिक भी शेष नहीं रही ( शलभ के ही समान ) ॥ ४६ ॥

ततो 'जयः स्याज्जनकात्मजाया' विद्याधरोणामिति तारतारैः ।
दिव्यैः स्वहस्तच्युतपारिजातप्रसूनवृष्ट्या सहितैर्निनादैः ॥
स्तम्बेरमाणां दशदिक्पतीनां शुण्डाभिरावर्जितपङ्कजाभिः ।
स्वर्वाहिनोपद्मरजोविमिश्र-दिव्याम्बुविप्रुट्परिवर्षणाभिः ॥
वनान्तपुष्पद्रुमसंहतीनामामोदमादाय सह प्रसूनैः ।
तपोनिधीनां तपसेव मिश्रैस्त्रिमार्गगायाः पयसा मरुद्भिः ॥
कलापिनां छत्रकनैर्मितीभिः सहैव षड्ज-ध्वनन-प्रतानैः ।
प्रताननीनां च सभाज्यमाना सच्छिद्रवेणुस्वरहर्षनृत्यैः ॥

तब स्वयं अपने हाथों ( नन्दनवन के सर्वोत्कृष्ट कल्पवृक्ष ) पारिजात के दिव्य पुष्प बिखेर कर विद्याधर वनिताएँ जोर से दिव्य स्वर में चिल्लाने लगीं 'सीता की जय हो सीता की जय हो, ॥ ४७ ॥

दशों दिशाओं के दिक्पाल दिग्गज अपनी सूड़ों में कमल पुष्प लेकर आकाश गंगा के पद्मराग से मिश्रित दिव्य जल की फुहारें बरसाने लगे, ॥ ४८ ॥

वायु के झोंके वनान्त में पुष्पित वृक्षों के पुष्प और उनकी सुगन्ध लेकर भूलोक की गंगा की फुहार या यूँ कहिये कि तपोनिधियों की अनन्त और अणिष्ठ तपस्याएँ लेकर बहने लगे, ॥ ४९ ॥

और मयूर भी षड्ज स्वर में चिल्ला-चिल्ला और अपने कलापों के छत्ते तान तान कर नाचने लगे ।

उस समय सछिद्र वाँसों की वंशी के स्वर में हर्ष से नाचतीं लताओं द्वारा पूज्यमान—॥ ५० ॥

पद्मासनस्था कमलेव नूत्नात् पयोधिमन्थादुपजायमाना ।
प्रज्ञेव पूर्णा विमले मुनीनां पदे पुनर्भास्वरतां दधाना ॥

ज्योतिष्मतीवेन्दुकलेन्दुमौलेर्नेत्रेषु लोकस्य सुधां दुहाना ।
वपुष्मतीवागमसंस्कृतिश्रीः संन्यासकाषायकमाश्रयाणा ॥

छन्दस्वतीव प्रतिभादिसूरेः प्रसादसौम्याशयतां स्नुवाना ।
सा संघशक्तिर्मुनिशोणितस्य सा कापि पुत्री पृथिवीतलस्य ॥

सा कापि पत्नी पुरुषोत्तमस्य सा कालरात्रिर्दशकन्धरस्य ।
भूर्जे हृते स्थण्डिलमण्डलेऽस्मिन् राष्ट्रस्य देवी च पुनर्व्यलोकि ॥

संकेतः—कमलया पद्मासनस्थितिः, नूत्नपयोधिमन्थेनाध्वसितातिमहत्कृच्छ्र-लब्धत्वं च साधर्म्यमूलम्, प्रज्ञया पूर्णत्व-भास्वरत्वे, इन्दुकलया ज्योतिष्मत्त्व-सुधा-धुक्त्वे, श्रुतिसंस्कृत्या संन्यासकाषाययुक्तत्वे, प्रतिभया च प्रसादसौम्याशयता। तत्र प्रसादः प्रतिभापक्षे काव्यगुणः, सीतापक्षे प्रसन्नता। सीता हि भारतराष्ट्रस्य देवीपदम-धिकरोति। सेयमत्र राष्ट्रस्य देवीति राष्ट्रियः पक्षीत्यादिव्यपदेशवद् उदारा वाक् ॥ ५१–५४ ॥

नवीन समुद्र मन्थन से उत्पन्न हो रही लक्ष्मी सी पद्मासन पर विराजमान; उस आश्रम में महामुनियों की पूर्ण प्रज्ञा सी पुनः जाज्वल्यमान।

लोक नेत्रों में शिव की ज्योतिष्मती चन्द्रकला सी सुधा बिखेरती; मूर्तिमती वैदिक संस्कृति सी संन्यासकाषाय धारण की हुई।

आदि कवि की छन्दस्वती ( पद्यमयी और मूर्तिमती ) प्रतिभा सी प्रसाद सौम्य आशय ली हुई; वह, मुनियों के रक्त की संघशक्ति; वह, पृथिवीतल की दिव्य पुत्री; वह पुरुषोत्तम की दिव्य पत्नी; वह रावण की कालरात्रि और इसलिए हमारे राष्ट्र की देवी वह ( सीता ) पुनः दिखाई दी, उसी चबूतरे पर भूर्जपत्र का आवरण नष्ट होते ही ॥ ५१–५४ ॥

लघुत्वमोजस्यणिमा शरीरे तस्यास्तदानीं महिमा च वृत्ते ।
वशित्वमन्तःकरणे यशःसु प्राकाम्यमासीद् गरिमा च बुद्धौ ॥

लघिमा थी उनके ओज में, अणिमा थी शरीर में, महिमा थी चरित्र में, वशित्व

था अन्तःकरण में, प्राकाम्य था यश में और गरिमा थी बुद्धि में। ( इस प्रकार वह सिद्धियों से परिपूर्ण थी ) ॥ ५५ ॥

**तां मञ्चकस्थां भुवनेश्वरीं वा पीताम्बरां वा त्रिपुराम्बिकां वा।**
**दिव्यानुभावां प्रति सर्वलोको भीत्या च भक्त्या च बभूव नम्रः ॥**

संकेतः—मञ्चकस्थां श्रीमद्देवीभागवते मणिद्वीपवर्णने प्रसिद्धे चिन्तामणिगेहस्ये मञ्चके स्थिताम्। पीताम्बरां श्रीवगलामुखीं भगवतीम्। त्रिपुरां त्रिपुरारहस्यादिषु प्रसिद्धचराम् ॥ ५६ ॥

वह ( सीता ) मानों मंचस्थ भुवनेश्वरी थी, या साक्षात् पीताम्बरा थी, या भगवती त्रिपुरा थी। अतः दिव्य तेज से मण्डित उस ( सीता ) को सभी लोगों ने भय और भक्ति दोनों के साथ प्रणाम किया ॥ ५६ ॥

**तां सर्वसभ्यैरभिनन्द्यमानामवेक्ष्य हृष्टः स सभापतिश्च।**
**सर्वोऽपि गेही तनयाजनस्य समादरे हृष्यति हि स्वभावात् ॥**

सभापति जनक जी ने देखा कि सीता को सब प्रणाम कर रहे हैं तो वे भी खुश हो गये। प्रत्येक गृहस्थ अपनी बच्चियों का समादर देखता है, तो खुश होता ही है, स्वाभाविक रूप से ॥ ५७ ॥

**अथोद्गता तस्य मुखाच्च वाणी पुत्रीं प्रति प्रीतिभृतः प्रसह्य।**
**'वत्से मम' त्वं सिततां गतानां लज्जासि सिद्धा मम मूर्धजानाम् ॥**

और पुत्री के प्रति उनके अतीव वत्सल मुख से निकला 'बेटी मेरी, तू सफेद हुए मेरे इन वालों की लाज सिद्ध हुई' ॥ ५८ ॥

**सा राममाता च पुनः प्रतिष्ठामवेक्ष्य लोके तपसः सतीनाम्।**
**'हृदि स्थितस्यापि दशाननस्य जाताद्य लोके मृतिरि'–त्यमंस्त ॥**

राम की माता कौसल्या ने भी संसार में सती महिलाओं की पुनः प्रतिष्ठा देख माना कि आज अन्तःकरण में स्थित रावणकी भी मृत्यु हो चुकी है ॥ ५९ ॥

**तस्मिन् क्षणे सागरमेखलायास्तृणानि कश्मीरभवान्यभूवन्।**
**अभूदथो भारतसिन्धुतोयं सुवासिताशं नवपाटलाम्भः ॥**

संकेतः—सागरमेखला पृथिवी। कश्मीरभवानि तृणानि केसराः। भारत-

सिन्धुः हिन्दमहासागरः। पाटलस्य गुलाबेतिप्रसिद्धस्य अम्भः गुलाबजलमिति लोकभाषायां प्रतीतम् ॥ ६० ॥ द्र. स्वातन्त्र्यसंभवे १४.४९-५०

उस क्षण सागरमेखला ( पृथिवी ) के सभी तृण केसर बन गए और हिन्दमहासागर का जल गुलाबजल बन गया, जिसने दिशाओं में चहुँओर सुगन्ध ही सुगन्ध बिखेर दी ॥ ६० ॥

**प्राग्ज्योतिषो वंक्षुतटानि यावत् त्रिविष्टपात् सिंहलकं च यावत् ।**
**अष्टादशद्वीप - शुभार्यभूमिर्वधूविभूषां नु तदाऽऽससाद ॥**

संकेतः—प्राग्ज्योतिषः असम—घात—क्षेत्रात्। वंक्षुः आक्ससनामा नदः। त्रिविष्टपम् तिब्बतदेशः। अष्टादशानि द्वीपानि सुमात्राबालिप्रभृतीनि सागरद्वीपानि। आर्यभूमिः भारतभूमिः ॥ ६१ ॥

प्राग्ज्योतिष क्षेत्र ( असम के पूर्वी जोता ) से लेकर वंक्षुके तटों तक और तिब्बत से लेकर सिंहलद्वीप तक फैली यह संपूर्ण आर्यभूमि ( भारतवर्ष ) भी अपने अठारहों ( समुद्री ) द्वीपों के साथ उस क्षण वधू के समान अलंकृत दिखाई दे रही थी ॥ ६१ ॥

**भवेद् विदेहो यदि वाऽवधूतो युक्तोऽथ योगी यदि वा जडोऽपि ।**
**चारित्र्यशुद्धयै भरतस्य भूमौ वधानदानं निखिलः करोति ॥**

बात यह है कि चाहे कोई विदेह हो या अवधूत, युक्त योगी हो या जड, भारतभूमि में प्रत्येक व्यक्ति ध्यान दिए रहता है चारित्र्यशुद्धि पर ॥ ६२ ॥

**व्युत्थाय सा च तनया जनकस्य शिष्टा-**
**चारं व्यपेक्ष्य निखिलानपि तान् ननाम ।**
**मित्रं रिपुः शिशुजनः प्रवयाश्च पूर्ण-**
**कामे भवन्ति विबुधे सममेव वन्द्याः ॥**

वे सीता जी भी उठीं और शिष्टाचार पर ध्यान देकर उन्होंने उन सबको प्रणाम किया। जो विद्वान् अन्तिम लाभ पा लेते हैं वे समदर्शी हो जाते हैं और उन्हें मित्र तथा शत्रु, बूढ़े तथा बालक सब समान दिखाई देते हैं ॥ ६३ ॥

**रामं कृशं, कृशतरां तनयां, समाजं**
**तत्राभिवीक्ष्य मुनिधाम्नि शुभां च शोभाम् ।**
**मेने तदा स जनकोऽपि सुताविवाह-**
**माङ्गल्यकालमिव तत्र पुनः प्रवृत्तम् ॥**

जनकजी ने कृशकाय राम, उनसे भी अधिक कृशकाय पुत्री ( सीता ), अयोध्यावासियों का वह समाज, और इस मुनि आश्रम में मांगलिक शोभा देखी तो उन्हें लगा कि मानों 'बिटिया के विवाह की मांगलिक घड़ी फिर से आ पहुँची है।' ॥ ६४ ॥

**तुष्टापि पुत्रमभिवीक्ष्य मुखं च वध्वाः**
**संबन्धिसन्निधिमवेक्ष्य परन्तु माता ।**
**भर्त्रे तदाश्रुकलुषाऽऽस, कुटुम्बिनीनां**
**योऽयं कुटुम्बरस एष हि नाकलाभः ॥**

किन्तु पुत्र ( राम ) और पुत्रवधू ( सीता ) का मुख देखकर प्रसन्न हुई माता कौसल्या के नेत्रों में अपने समधी ( जनक ) जी को देख आँसू आ गए, उन्हें उस समय दशरथ जी का अभाव खटका। घरद्वार, बालबच्चे और समधीसौर वाली महिलाओं का जो कौटुम्बिक रस है वही जो होता है उनका स्वर्ग ॥ ६५ ॥

**इत्येवं, सा मुनिजनसमिन्मातरस्ताश्चमूः सा**
**तौ स्त्रीपुंसौ नयनकुहरे स्फारतारः स बाष्पः ।**
**या नामासीत् सहृदयदशा सत्कवेरस्य धाम्नि**
**स्यात् को वा तां कथयितुमलं मानुषेषु प्रवेकः ॥**

**संकेत**—मुनिजनसमित् इति शान्तरसः, तौ स्त्रीपुंसौ सीतारामौ इति शृङ्गारः, बाष्प इति करुणः, चमूरिति वीरः, मातर इति वात्सल्यम्, इत्येवं वाल्मीकेराश्रमे रस-भावानामेव समाजः। तं को वर्णयितुं क्षमेतेति भावः ॥ ६६ ॥

इस प्रकार, मुनियों की वह सभा, वे मातायें, वह सेना, वे स्त्रीपुरुष (सीताराम) और आँखों के वे स्फारतार आँसू। इस सबसे इस सत्कवि के धाम में सहृदय के हृदय की जो दशा थी उसे मनुष्यों के बीच भला कौन हो सकता है समर्थ कहने में ॥ ६६ ॥

इति सनातनकवि-श्रीमद्रेवाप्रसादद्विवेदिकृतौ 'उत्तर-
सीताचरित'नाम्नि सर्गबन्धे मातृप्रत्यभिज्ञानं
नाम नवमः सर्गः ॥ ९ ॥

●

# दशमः सर्गः

**साकेतिनां तत्क्षणमेव तेषां तत्सन्ततावुत्सुकता मनःसु ।**
**अजाग उद्वास्य समस्तमेव भावान्तरं सा पतिपक्षवृत्तिः ॥**

**संक्षेपः**—तत्सन्ततौ सीतासन्ततौ ॥ १ ॥

किन्तु, वहाँ वे जो साकेत के रहने वाले थे उनके मन में तत्काल सीता की सन्तति की जिज्ञासा जागी, अन्य सभी भावों को हटाकर, जैसा कि पतिपक्ष के लोगों में हुआ करता है ॥ १ ॥

**चमूचरैर्जृम्भक-हेति-सिद्धौ रूपेऽनुभावेऽपि च राघवस्य ।**
**निरीक्ष्य साम्यं प्रतिपक्ष-वीर-बाल-द्वये तत्सुतताऽन्वमानि ॥**

सैनिकों ने रूप, प्रभाव और जृम्भकास्त्रसिद्धि के कारण अनुमान किया कि प्रतिपक्ष से लड़ते दोनों वीर बालक ही सीता के पुत्र हैं ॥ २ ॥

**क्व ताविति प्रोत्सुकचेतसश्च ते स्वान् चतस्रोपि दिशाऽक्षिभृङ्गान् ।**
**कस्तूरिकानाभिमृगौ नु बालौ गवेषयन्तः क्रमयाम्बभूवुः ॥**

कस्तूरीमृग जैसे उन दोनों बालकों को 'इस सभा में वे कहाँ हैं' यह देखने हेतु अत्यन्त उत्सुक वे सब उनके नेत्रभृङ्ग चारों दिशाओं में घुमा गए ॥ ३ ॥

**अवेक्ष्य सीतां प्रसवाय तस्याः समुत्सुकास्ते च, वसन्तकाले ।**
**गृहाद् गता आम्रलतां निदाघे निवृत्य पश्यन्त इव व्यराजन् ॥**

सीता को देखकर उसकी सन्तति के लिए उत्सुक वे सब, घर से वसन्त में गए और ग्रीष्म ( आषाढ़ ) में लौटकर आम्रलता को देखते व्यक्तियों से लग रहे थे ॥ ४ ॥

**पिता च माता च पितामही च मातमहश्चापि तदात्र सर्वे ।**
**विना कुमारैर्न तथा विरेजुर्विनाङ्कुरैर्मूर्ध्नि यथा द्रुमाद्याः ॥**

पिता, माता, पितामही, ये सब कुमारों के बिना उस क्षण ऐसे लग रहे थे जैसे बिना अंकुरों के पेड़ पौधे ॥ ५ ॥

**आसन् कुमारास्तु तदा निजेषु स्वाध्याय-शस्त्राभ्यसनेषु लग्नाः ।**
**य उत्सवाद् बिभ्यति शस्त्र-शास्त्राभ्यासे स्वराष्ट्रं पिपुरत्यमी हि ॥**

और कुमार, उस समय अपने स्वाध्याय तथा शस्त्राभ्यास में निरत थे। शस्त्र और शास्त्र के अभ्यास के समय जो उत्सवों से डरते हैं वे ही रक्षा कर पाते हैं अपने राष्ट्र की ॥ ६ ॥

**स चन्द्रकेतुश्च वयस्यभावात् तेष्वेव बालेष्वभवत् स्वधीतिः ।**
**स उत्सवो यो हि वयः-प्रवृत्ति-साम्येन सम्यक् प्रथते प्रहर्षात् ॥**

वह चन्द्रकेतु भी मित्रता हो जाने से उन्हीं बालकों के साथ अध्ययन निरत था। उत्सव तो वही जो वय और प्रवृत्ति के साम्य से खुशी-खुशी मनाया जाता हो ॥ ७ ॥

**स आश्रमश्चापि तदास्य सूरेस्तैः स्नातकैर्हन्त तथा चकासे ।**
**यथा खलो निस्तुष-मुष्टि-राशि-व्रातैः कृषाणस्य गृहे चकास्ति ॥**

संकेतः—स्नातकैरवाप्तविद्यैः। खलः खलिहानेतिभाषायाम्। निस्तुषत्वेन स्नातकानां संस्कृतता, मुष्टिः फसल इति भाषायाम्। तस्य राशिः रास-पदेन भाषायां वाच्या। कृषाणः कृषीवलः। कृषीवलस्य धान्यमपि परार्थमेव भवति ॥ ८ ॥

उन स्नातकों से युक्त वह आदि कवि का आश्रम भी ऐसा लग रहा था जैसा किसान का उड़ी हुई धान्य राशि से भरा खलिहान लगा करता है ॥ ८ ॥

**वाल्मीकिरुद्वीक्ष्य सभान्तरङ्गं चकार शिष्टागमनावकाशम् ।**
**शास्त्रेषु विद्या पदवाक्यरूपा शिष्टेष्वथो सार्थतया चकास्ति ॥**

वाल्मीकिजी ने सभा का मनोभाव परखा और शिष्टागमन-प्रयुक्त अनध्याय की घोषणा कर दी। विद्या, शास्त्र में तो केवल पदरूप या वाक्यरूप से रहती है। अर्थरूप में तो वह शिष्टों में ही दिखाई देती है ॥ ९ ॥

**गुरोर्नियोगाद् वटवो विरेमुः स्वाध्यायतो नैव निजप्रवृत्त्या ।**
**माध्वीकतः किं मधुकृत्समूहः स्वयं विरज्यत्यसति प्रवाते ॥**

गुरु का आदेश था, अतः बालकों ने अध्ययन छोड़ा, स्वतः प्रवृत्ति से नहीं। तेज हवा न चले तो भौंरे मधु से क्या अपने आप दूर हो पाते हैं ॥ १० ॥

**वयस्यभावादथ चन्द्रकेतुः कुशं लवं चापि हठान्निनाय।**
**सभाप्रदेशं, न भवन्ति सिद्धा न तत्क्षणं हन्त सतां समीहाः॥**

अब चन्द्रकेतु मित्रता के कारण कुश और लव को भी सभा स्थल ले आया। सत्पुरुषों की इच्छाएँ तत्क्षण पूरी हुआ ही करती हैं॥ ११॥

**तानागतान् वीक्ष्य सभा प्रहर्षोदधाविवाब्रूडदुद्गढबाष्पा।**
**अनिश्चयः किन्तु समेषु कुम्भोद्भवस्य चुल्लूत्वमभिप्रपेदे॥**

**संकेत**—अब्रूडत् निममज्ज। अनिश्चय इमावेव सीतातनयावेवेति निश्चयस्याभावः। कुम्भसंभूतः समुद्रशोषयिता भगवानगस्त्यः॥ १२॥

उन बच्चों को आया देख वह सभा आँखों में आँसू ले प्रहर्ष के समुद्र में डूब गई, किन्तु अनिश्चय उन सबमें अगस्त की चुल्लू बन रहा था॥ १२॥

**ननाम सौमित्रिसुतोऽर्चितेभ्यः संकीर्त्य नाम स्वपितुः, परन्तु।**
**तौ पित्रबोधाद् बत मातुरेव नाम्ना प्रणामाय नतावभूताम्॥**

**संकेत**—अर्चिताः पूज्याः। स्वपितुः लक्ष्मणस्य, तथा समुदाचारात्॥ १३॥

तभी चन्द्रकेतु ने अपने पूज्यों को प्रणाम किया अपने पिता का नाम लेकर, परन्तु उन दोनों (कुश लव) बालकों ने पिता का नाम ज्ञात न होने से माता का नाम लेकर प्रणाम किया॥ १३॥

**वाक् साऽत्र सीता-जन-मानसेषु निःश्वासवीचित्वमवापदुच्चैः।**
**अस्वत्वबोधेषु जनेषु किन्तु नेत्राम्बुधारावपुषा व्यगालीत्॥**

**संकेत**—सीता च जनाश्चेति द्वन्द्वः। अस्वत्वबोधेषु नास्ति स्वत्वस्य बोधो येषां कृते कुशलवयोस्तेषु॥ १४॥

उन बच्चों की वह वाणी सीता से सम्बन्धित (कौसल्या आदि) व्यक्तियों में तो (आश्वासनपूर्ण) निःश्वास की ऊँची तरंगो के रूप में परिणत हुई; किन्तु उन व्यक्तियों में जिन्हें कुश लव हमारे ही हैं ऐसा बोध नहीं था, नेत्रजल की धारा बनकर वह निकली॥ १४॥

**ततः कविः कारुणिकः स्वकाव्यप्रबन्धपूर्तिं नु निरीक्ष्य हर्षात्।**
**रामं च सीतां च निदर्श्य ताभ्यां वचःप्रसादं प्रददाविवतीव॥**

तब कारुणिक कवि (वाल्मीकि जी) ने समझा कि अब उनके काव्य की पूर्ति उपस्थित है तो उन्होंने राम और सीता को लक्ष्य कर उन पुत्रों से कहा—॥ १५॥

**पुत्रौ श्रुतं यन्मम रामकाव्यं यस्तत्र रामः स हि राम एषः ।**
**या तत्र सीता ननु सैव सीता भवत्सवित्री, न तु काचिदन्या ।।**

संकेत—रामकाव्यं रामं नायकतयाश्रित्य कृतं काव्यं रामायणम् ।। १६ ।।

पुत्रों, तुमने मेरा जो ( रामायण नामक ) रामकाव्य सुना है, उसमें जो राम हैं वे ये ही राम हैं और उसमें जो सीता हैं वे भी ये ही सीता हैं, इनसे भिन्न नहीं ।। १६ ।।

**तौ चक्षुरुन्मीलनपण्डितेन वाल्मीकिना सद्गुरुणा तदेत्थम् ।**
**स्वबिन्दुसिन्धू पितरौ पुरस्तात् संप्रत्यभिज्ञाप्य कृतौ कृतार्थौ ।।**

संकेत—स एव सद्गुरुः यः शिष्यचक्षुः सम्यगुन्मीलयति । स्वमात्मा, स एव बिन्दुरेकदेशः, तदर्थं सिन्धुभूतौ समष्टिभूतौ ।। १७ ।।

इस प्रकार आँखें खोल देने में चतुर सद्गुरु वाल्मीकिजी ने उनके उन्हें माता-पिता पँहुचनवा कर कृतकृत्य किया ।।१७।।

**आनन्दसिन्धावनयोरिदानीं कः सेतुबन्धं रचयेत् कलावित् ।**
**एकस्तटो यत्र स राम एव तटान्तरत्वं च बिभर्त्ति सीता ।।**

संकेतः—इदानीं परमात्मप्रबोधक्षणे च । लङ्काभिषेणनक्षणे येन सेतुबन्धो रचितः स राम एव यदा तटतां गतः, यस्या आसत्तये च रचितः सा सीतैव च तटान्तरत्वमासादितवती तदा सेतुबन्धस्य प्रयोजनमेव नावशिष्टम् । सत्यपि प्रयोजने च क्षमतापि रामादतिरिक्ते नावशिष्टा । लब्धे च निस्सीमे परमात्मनि को नु बन्धार्थमुद्यमः । सत्यपि च तादृशानन्दप्रतिपादनाभिलाषे कविनापि वा केन क्षमेण भवितुं शक्येतेति विविधार्थव्यञ्जनस्थानमिदम् ।। १८ ।।

इस समय इन दोनों में जो आनन्द का समुद्र उमड़ा उस पर बाँध कौन कलाकार बाँध सकता था, क्योंकि ( समुद्र पर तट बाँधने के लिए प्रसिद्ध जो ) राम और सीता ( थे वे ) ही यहाँ तट बने हुए थे ।। १८ ।।

**ज्ञात्वापि तातं, जननीं निजां तौ विलोकयामासतुरुद्गताश्रू ।**
**रविं प्रति प्रीतिभृतोऽपि वृक्षाः शिरांसि भूमिं प्रति नामयन्ते ।।**

संकेतः—रविरेवेन्द्रः । भूमिरेव शची । तयोर्दाम्पत्यं प्रतीतमेव ।। १९ ।।

पिता को जानकर भी उन बच्चों ने आँखों में आँसू लेकर अपनी माता की ओर देखा । वृक्ष सूर्य के प्रति प्रीतिमान् होने पर भी सिर तो पृथिवी की ओर ही झुकाते हैं ।। १९ ।।

**सोद्यानभूर्यद्वदुदास माता महाकविस्तत्प्रसवौ परन्तु ।**
**उद्यानपालप्रतिमस्तदानीं तत्स्वामिने दातुमियेष हर्षात् ॥**

**संकेतः**—उद्यानपालो हि उद्यानस्वामिने तदीयोद्यानप्रसूतानि फलानि समर्पयत्येव ॥ २० ॥

किन्तु सीता उद्यानभूमि की नाई तटस्थ रही । तब उद्यानपाल की भूमिका निवाह रहे महाकवि ने उसके उन दोनों फलों को उनके स्वामी (अधिकारी श्रीराम) को समर्पित कर देना चाहा, प्रसन्नता के साथ ॥ २० ॥

**रामस्तु नात्मानममंस्त योग्यं गुरौ वसिष्ठे सति पुत्रलब्ध्यै ।**
**ममत्वतो यद् विनियोग एव राष्ट्राय बालस्य सतां प्रशस्यः ॥**

किन्तु राम ने भी गुरु वसिष्ठ के रहते हुए अपने पुत्रों का समर्पण लेने में स्वयं को योग्य नहीं माना । कारण कि सत्पुरुष ममत्व की अपेक्षा बच्चों का 'राष्ट्र के लिए विनियोग' अधिक अच्छा मानते हैं ॥ २१ ॥

**गुरुर्वसिष्ठोपि च पारिजाताविवाश्रमाब्धेरुपलभ्य तौ द्वौ ।**
**मनोरथान् भारतराष्ट्रमातुः स्वायत्त-संपूर्ण-फलानपश्यत् ॥**

**संकेतः**—स्वायत्तेति स्वतन्त्रताऽभिव्यक्ता । अनेवंविधेषु बालेषु स्वतन्त्रापि भारतमाता किमिव वा संपूर्णफला भवेदिति चान्तरङ्गम् ॥ २२ ॥

गुरु वसिष्ठ ने भी वाल्मीकि के आश्रमरूपी समुद्र से उन दोनों को पारिजात के समान प्राप्त कर भारत माता के मनोरथों के फलों को स्वायत्त और सम्पूर्ण माना ॥ २२ ॥

**न यायजूकस्य परन्त्वदृष्टं स्प्रष्टुं कदाचित् क्षमते पुरोधाः ।**
**रामाय तद् द्वावपि बालकौ तौ वर्णाश्रमाणां गुरुवेऽदिशद् सः ॥**

किन्तु यजमान का अदृष्ट पुरोहित छू भी नहीं सकता, अतः वसिष्ठ जी ने भी वे दोनों पुत्र वर्ण और आश्रमों के गुरु श्रीरामको ही सौंप दिए ॥ २३ ॥

**स चापि वाल्मीकिवसिष्ठदृग्भ्यां परीक्षितौ प्राप्य सुतावहृष्यत् ।**
**न पिण्डमात्रं नृपसन्ततीनामार्याविनौ राष्ट्रपतित्वमेति ॥**

**संकेत** – नृपपुत्रो हि नृपस्योत्तराधिकारमर्हतीति सामान्यं शास्त्रम् । तत्र "विनीत एवे"—ति विशेषः । स एवायमत्रोपजीव्यः ॥ २४ ॥

राम ने भी उन पुत्रों को वसिष्ठ और वाल्मीकि की दृष्टि से सुपरीक्षित पुत्रों के रूप में स्वीकार किया और वे उनकी उपलब्धि से तभी प्रसन्न हुए । भारतवर्ष में राजकुमारों के पिण्डमात्र राष्ट्रपति नहीं बनाए जाते ॥ २४ ॥

**कथं न शिल्पोत्तम एषकोऽत्र प्रशस्तिपात्रत्वमुपाददातु ।**
**यत्रोपलः सूर्यमणिः, कवीन्द्रः शिल्पी, वसिष्ठश्च परीक्षकोऽस्ति ॥**

**संकेत**—शिल्पोत्तमत्वेनात्र कुशलवौ विवक्षितौ । सूर्यवंशरूपः सूर्यकान्तमणिः मणिः उपलः शिल्पायापेक्षितः प्रस्तरः । स आदिकविः वाल्मीकिः ॥ २५ ॥

और वह उत्तम शिल्प प्रशंसापात्र क्यों न हो, जहाँ शिला का काम किया सूर्यकान्तमणि ने, वैसे कवि ( वाल्मीकि ) हैं शिल्पी और परीक्षक ठहरे गुरु वसिष्ठ ॥ २५ ॥

**स राजवंशो मिलितः सुताभ्यां तथा तदानीं निपुणं विरेजे ।**
**लौहित्य-सिन्धु-द्वितयेन युक्तो विराजते हन्त यथैष देशः ॥**

उस समय (अयोध्या का) वह राजवंश उन दोनों पुत्रों से मिलकर उसी प्रकार खूब सुशोभित हुआ जिस प्रकार ब्रह्मपुत्र और सिन्धु (इन दो नदों) से मिलकर यह देश सुशोभित होता रहता है ॥ २६ ॥

**सीतातटस्थत्वविषाददिग्धा प्रसन्नता राजकुलस्य तस्य ।**
**निदाघतप्तस्य सरोवरस्य प्रसन्नताया भगिनी बभूव ॥**

किन्तु सीता की तटस्थता से मिश्रित उस राजवंश की वह प्रसन्नता ग्रीष्म से संतप्त सरोवर की प्रसन्नता की बहिन सिद्ध हुई ॥ २७ ॥

**तावश्रुणार्घ्यं पटुसीत्कृतैश्च शुभागतं मातृजनेषु लब्ध्वा ।**
**यन्मङ्गलं प्रापतुरस्य दास्ये को नाम माङ्गल्यविधिः कृतो स्यात् ॥**

**संकेत**—शुभागतम् स्वागतशब्दम् ॥ २८ ॥

उन पुत्रों की माताओं ( पितामहियों ) से आँसू के अर्घ्य और सिसकियों के जो स्वागतवचन प्राप्त हुए और उनसे जो मंगलाचरण प्राप्त हुआ संसार की ऐसी कौन सी मांगल्य विधि है जो इसकी गुलामी भी कर सके ॥ २८ ॥

**मातामहस्यापि विना स्वपुत्रीं दौहित्रयोर्हन्त तयोः प्रसादः ।**
**जातोऽनवाप्तप्रतिके स्वशास्त्रे स्वभ्यस्तयोः शास्त्रकृतः प्रसादः ॥**

**संकेत**—न प्राप्ता प्रतिः पुस्तकं यस्य तस्मिन्, सु सुष्ठु अभ्यस्तयोः शिष्ययोरिति यावत्, शास्त्रकृतः तच्छास्त्रकर्तुः प्रसादः प्रतोषः ॥ २९ ॥

अपनी पुत्री के बिना मातामह ( जनक ) को भी उन दोनों दौहित्रों की प्राप्ति से जो प्रसन्नता हुई वह वैसी ही प्रसन्नता थी जैसी किसी शास्त्रकार की

प्रसन्नता उन शिष्यों पर हो सकती है जिन्हें उसका वह शास्त्र याद हो जिसकी पुस्तक गुम गई हो ॥ २९ ॥

**तस्मिन् क्षणे लक्ष्मणसंभवोपि ज्येष्ठां सुवं प्रापदथो शिरः स्वम् ।**
**ननाम तत्पादकुशेशयाभ्यां सादृश्यतोऽद्याप्यविमानिताभ्याम् ॥**

संकेतः—लक्ष्मणसंभवः चन्द्रकेतुः ज्येष्ठा सूः सीता । सादृश्यमेव विमानना सा नास्ति याभ्याम् । पादयोः कुशेशयत्वं शिष्टोक्तिमात्रम्, नतु साम्यनिबन्धनम् । पतिव्रतान्तरसादृश्यमत्र विमाननात्वेन ग्राह्यम् ॥ ३० ॥

उसी समय लक्ष्मण का पुत्र चन्द्रकेतु भी बड़ी माँ (सीता) के पास पहुँचा और सिर झुकाकर उनके उन चरणारविन्दों को प्रणाम किया, जिनका सादृश्यरूपी अपमान आज तक नहीं हुआ है ॥ ३० ॥

**सीताङ्घ्रितीर्थे प्रणतस्य तस्य द्वावेव शोभामनुहर्तुमीशौ ।**
**कुमारिकायां निजराष्ट्रभूम्यै नतो विवेको यदि वा महाब्धिः ॥**

संकेतः—कुमारिकायां कन्याकुमारीति प्रसिद्धायां भारतस्थलवेदिपादभूतायां भुवि विवेको विवेकानन्दनामा स्वामी ॥ ३१ ॥

सीताजी के चरणकमल रूपी तीर्थ में प्रणाम के लिए झुके उस चन्द्रकेतु की शोभा कन्याकुमारी में अपनी मातृभूमि के लिए प्रणत दो ही में देखी जा सकती है, एक महोदधि में और दूसरे स्वामी विवेकानन्द में ॥ ३१ ॥

**तन्मूर्धजानामरुणे समूहे मातुर्वदातद्युति पादपद्मम् ।**
**शोणारुणाम्भःपरिवेषरम्यामुवाह लक्ष्मीं द्युसरिज्जलानाम् ॥**

संकेतः—शोणो नाम नदः ॥ ३२ ॥

चन्द्रकेतु के ताम्रवर्ण के कुन्तलों के बीच माता का उज्ज्वल पादपद्म शोणनद के अरुण जल से घिरकर और सुन्दर लग रहे गङ्गाजल की शोभा लिए हुये थे ॥३२॥

**प्रियस्य पुत्रं निजदेवरस्य सा चापि नप्तारमिवाशु मूर्ध्नि ।**
**शिशिङ्घ, किन्त्वस्य तपोवनीयान्यपाचिकीर्षन्न रजांसि तस्मात् ॥**

संकेत—तस्मात् मूर्ध्नः ॥ ३३ ॥

उस माता ( सीता ) ने भी अपने प्रिय देवर के पुत्र का सिर नाती के सिर के समान तत्काल सूँघा, किन्तु ( प्रणाम के समय ) उस ( सिर ) में लगी तपोवन की पवित्र धूल को उनसे दूर नहीं करना चाहा ।। ३३ ।।

**वतीर्य सा स्थण्डिलतस्ततश्च प्रभूतपुष्पेष्टिरजोविमिश्रैः ।**
**रजोभिरस्यालिकहेमपट्टे तपोवनीयैस्तिलकं वितेने ।।**

**संकेत**—अलिकं मस्तकमेव हेम्नः पट्टः तत्र । प्रभूतानां पुष्पाणाम् इष्टीनां च रजोभिः विमिश्रैः रजोभिः । कथितपदत्वमत्र न संभाव्यम्, रजोद्वन्द्वस्यैवात्र मिश्रताया विवक्षणात् ।। ३४ ।।

सीता जी उस चबूतरे से उतरीं और तपोवन की, पर्याप्त पुष्पों के प्रभूत रजः-कणों से मिश्रित धूल से चन्द्रकेतु के ललाट रूपी सुवर्ण पट्ट पर तिलक किया ।।३४।।

**तस्मिन् क्षणे स्वानि मितानि मत्वा भाग्यानि पुत्रस्य तु पुष्कलानि ।**
**स्थितोऽपि तूष्णीं बत लक्ष्मणोऽपि सेर्ष्यश्च हृष्टश्च बभूव वीरः ।।**

**संकेत**—मातृभूमिरजस्तिलकं प्रति वीरस्य नितान्तं साभिलाषत्वात्, लक्ष्मणस्य च वीरत्वात्, सीतामातुः सकाशात् तथाविधसंभावनस्य चाप्राप्तत्वात् ।। ३५ ।।

उस समय अपने भाग्य को मित और अपने पुत्र के भाग्य को अमित मान चुप बैठे लक्ष्मण को भी ईर्ष्या और खुशी दोनों ही हो रही थी । ( पिता होने के साथ साथ ) वे वीर भी जो थे ।। ३५ ।।

**सा मातृभूमे रजसा विधाय भाले विशेषं विससर्ज पुत्रम् ।**
**पुत्रस्त्वसौ नैव शशाक मोक्तुं तां मातरं तच्च तदङ्घ्रितीर्थम् ।।**

माता ( सीता ) ने तो मातृभूमि की धूल से ललाट पर तिलक कर पुत्र ( चन्द्र-केतु ) को बिदा दे दी, परन्तु यह पुत्र उस माता और उसके चरणतीर्थको नहीं छोड़ सका ।। ३६ ।।

**वात्सल्यशान्त्योरिति मिश्रभावे तस्यां स्थितेऽस्मिन् विदधातु धीरः ।**
**इयं सितेदं पय एष सिन्धुरयं घटो वेति परिच्छिदां कः ।।**

**संकेतः**—माधुर्याय सितापयसोः, परिमाणाय च सिन्धुघटयोरौपम्यम् ।।

इस प्रकार उस माता ( सीता ) में वात्सल्य और शान्ति का जो मिश्रण था उसमें कौनसा धीर पुरुष यह परिच्छेद कर सकता था कि उन वात्सल्य और शान्ति के मिश्रण में यह मिश्री है और यह दूध अथवा यह सिन्धु है और यह घट ।। ३७ ।।

**तां मातृनिर्वेददशामिदानीं तां वत्सकप्रीतिदशाञ्च दृष्ट्वा ।**
**अधीरतां हन्त गतं मुनित्वं, दीर्घं निशश्वास च सद्गृहित्वम् ॥**

संकेतः—मुनित्वापेक्षया गृहित्वमात्मानं प्रगुणं मन्तुमारब्धमिति पर्यायेणोक्तिः।
माता का वह निर्वेद और वह वात्सल्य देखकर मुनित्व ही अधीर हो उठा और सद्गृहित्व ही आश्वासन की लम्बी सांस लेने लगा ॥ ३८ ॥

**को वा ब्रवीति 'क्षणशः प्रयाति संसार एष प्रलयाग्निगर्भम्' ।**
**स मीलिताक्षो बत 'मातृकुक्षि-कुमारशक्ति'-द्वितये वराकः ॥**

संकेतः—प्रतिक्षणपरिणामिनो हि सर्व एव भावा इति क्षणभङ्गवादी बौद्धः। मातृकुक्षिर्हि कुमारशक्तिं नित्यं नूतनयति, 'नवो नवो भवति जायमान' इत्यागमिनस्तु तत्रात्मनित्यत्ववादितया प्रतिष्ठन्त इति भेदः ॥ ३९ ॥

कौन कहता है कि 'यह संसार प्रतिक्षण प्रलयग्नि के गर्भ में समाता जा रहा है'। उसकी आँखें बन्द हैं और वह वेचारा 'माता की कुक्षि तथा कुमारशक्ति' इन दोनों तत्त्वों को देख नहीं पा रहा है ॥ ३९ ॥

**सा कोसलेन्द्रस्य सुता नवीना स चापि नूत्नो बत लक्ष्मणो हि ।**
**अयं विशेषो वृणुतेऽत्र मातैवारण्यवासं, न च राति पुत्रः ॥**

संकेतः—कोसलेन्द्रस्य सुता कौसल्या। सा सीता वधूः, कौसल्याया एव प्रतिमूर्तिः। स चन्द्रकेतुश्च नूत्नो लक्ष्मण एव। यथा च साकेते लक्ष्मणो ज्येष्ठां मातरं वनवासमयाचत सा चान्वमोदत तथैवात्रापि स्थितिः। विशेषस्त्वयं यदत्र मातैव पुत्रं स्वतो वने स्थातुं याचते, पुत्रश्च न राति ददाति ॥ ४० ॥

सीता नई कौसल्या है और चन्द्रकेतु नया लक्ष्मण। यहाँ माता ही पुत्र से स्वयं के लिए वनवास माँग रही है और पुत्र दे नहीं रहा ॥ ४० ॥

**देहेन रामं च हृदा च सीतां भजँस्तदानीं ननु यौगपद्यात् ।**
**स लक्ष्मणोऽपि प्रतिमापरोऽभूत् स्थितिं च सत्यं च सहैव रक्षन् ॥**

संकेतः—हृदा चन्द्रकेतुरूपेण। पुत्रो हि पितुर्हृदयमेव ॥ ४१ ॥

लक्ष्मण देह से राम के साथ थे और हृदय से सीता के। इस प्रकार वे दोनों की सेवा एक साथ कर रहे थे और मर्यादा तथा सत्य दोनों की रक्षा भी साथ ही साथ करते जा रहे थे ॥ ४१ ॥

**सा चन्द्रकेतौ स्वसुर्लमिलायाः स्वदेवरस्यापि च लक्ष्मणस्य ।**
**सुमानुषाद्वैतमवेक्ष्य जाता प्रसह्य मातृत्वरसे निमग्ना ॥**

संकेतः—सुमानुषयोर्दम्पत्योः अद्वैतमेकत्वम् । पुत्रे पित्रोराकृतेरैक्यात् ॥ ४२ ॥

सीता चन्द्रकेतु में बहिन उर्मिला और देवर लक्ष्मण का सुमानुषाद्वैत ( दाम्पत्यजन्य एक नया अद्वैत ) देखकर मातृत्व के रस में बरवस जा डूबी ॥ ४२ ॥

**क्षणेऽत्र सा बष्कयिणीव सीता स्निग्धेऽञ्चले यां समुवाह धाराम् ।**
**निपीय तां मृष्टवपुर्मुनित्ववत्सः समुत्पुच्छयितुं प्रवृत्तः ॥**

संकेतः—मुनित्व-वात्सल्ययोर्विरोधाभावादेवम् । बष्कयिणी चिरप्रसूता गौः, सीताया अपि चिरप्रसूतात्वमेव, वत्सयोर्वयस्कत्वात् । अञ्चलपदेन "आंचरे" ति हिन्दीपदमूलतया स्तनौ वाच्यौ । मृष्टं सुपुष्टं वपुः । मुनित्वं हि मातृत्वभावेन परिपोषमासादयति । समुत्पुच्छयितुं पुच्छमुत्थाप्य नर्त्तितुं प्रवृत्तः सा हि वत्सजातिः ॥ ४३ ॥

सीता ने बष्कयिणी ( चिरप्रसूता ) गौ के समान अपने आँचल ( स्तनों ) में जो धारा धारण की उसे पीकर चिकना मुनित्वरूपी बछड़ा पूँछ उठाकर दौड़ने लगा ॥ ४३ ॥

**यो मातृभावे महिमाऽस्मदीयः स वै महाकारुणिकः प्रभुर्वः ।**
**सा ब्रह्मसिद्धिः स शिवत्वलाभस्तत् सार्वभौमं ननु मुक्तिसत्रम् ॥**

संकेतः—मातृभावे महिमा महामातृत्वम्, अस्मदीयः अस्माभिरङ्गीकृतः, वोऽस्मद्भिन्नानां महाकारुणिकः प्रभुः । सार्वभौमं मुक्तिसत्रं काश्यां प्रसिद्धम् ॥ ४४ ॥

हमारे यहाँ जा ( मातृत्व की महत्ता है अर्थात् हमारे सिद्धान्त में ) महामातृत्व है वही तो है आप लोगों का महाकारुणिक ईश ( ईसामसीह ), या ब्रह्मसिद्धि, या शिवत्वलाभ या ( काशी का ) सार्वभौम मुक्तिसत्र ॥ ४४ ॥

**तं मातृभावं शिशुवद् भजद्भ्यो हस्तामलकं भुक्तिरथो विमुक्तिः ।**
**सा पिच्छला वत्सलताभिधाना काचिन्महायानसृतिर्बुधानाम् ॥**

संकेतः—सा महामातृत्वरूपा । महायानसृतिः महायानमार्गः, न तु यथा बौद्धेषु प्रसिद्धा बालवृद्धस्त्रीपुरुषयादृच्छिकप्रव्रज्याप्राणा ॥ ४५ ॥

उस मातृभाव के प्रति जो व्यक्ति शिशु को नाईं समर्पित रहता है उसके लिए भुक्ति और मुक्ति हस्तामलक रहती हैं । वही तो है बुधजनों का वत्सलतानामक पिच्छल महायान पथ ॥ ४५ ॥

**सा विश्वविध्वंसविरामभूमिः सा विश्वशान्त्यै पटु सामरस्यम् ।**
**ज्ञानक्रियाभक्तिमयी च काचिद् योगत्रिवेणीप्रतिमापि सैव ॥**

पद्यमिदं तस्मिन् दिने निष्पन्नं यस्मिन् वियतनामदेशे नरसंहारोऽसूचि ॥४६॥

वही है विश्वविध्वंस का विराम, वही है विश्वशान्ति में समर्थ सामरस्य और वही है तीन योगों की ज्ञान-कर्म-भक्तिमयी त्रिवेणी ॥ ४६ ॥

**सा ब्रह्मकाव्ये मधुगीतिवीणा तत्त्वधन्वन्यमृताम्बु सैव ।**
**तत्रास्ति बोधस्य न साधकत्वं प्रपत्तिमात्रं बत तत्र सर्वम् ॥**

**संकेतः**—ब्रह्म यदि काव्यं तर्हि महामातृता तत्र मधुमयी गीतिदात्री पद्यतासंपादयित्री वीणाऽस्तीति योजना । एवमेव तद् यत् तत्त्वं तत्पदव्यपदेश्यं तद्रूपिणि धन्वनि मरौ सा महामातृतैवामृतमयजलरूपा । प्रपत्तिमात्रं शरणमात्रम् । ऋते ज्ञानान्न मुक्तिरिति यदुच्यते तदपि तत्र न विरुध्यते, तादृशप्रपत्त्या सर्वविधज्ञानसंभवात् ॥ ४७ ॥

वह ( महामातृत्व ) ही है ब्रह्मरूपी काव्य में मधुवर्षण करने वाली संगीतवीणा, 'तत्'-तत्त्वरूपी मरुस्थल में वही है अमृतस्रोत । उसमें बोध सहायक नहीं होता । उसमें तो केवल प्रपत्ति ही सब कुछ है ॥ ४७ ॥

**तामेव मातृत्वदशां तदानीं विदेहपुत्र्यामुपलक्ष्य सर्वः ।**
**लोकः स्वरं केवलमेकमूचे 'माता तु सीतैव चराचरस्य' ॥**

विदेहपुत्री सीता में उस समय उसी मातृत्व का दर्शन कर सब लोग एक ही स्वर बोल बैठे 'इस चराचर की माता तो सीता ही है' ॥ ४८ ॥

उस समय लोग मन ही मन इस प्रकार के विचारों में डूबने लगे कि—

**धन्यासि पत्यावथ पुत्रगर्भे धातुं स्वराष्ट्रस्य पतित्वमुच्चैः ।**
**कालप्रबुद्धा स्वयमेव तेपे राज्यं समुत्सार्य वने दृढं या ॥**

**संकेतः**—पुत्ररूपो गर्भः पुत्रगर्भः कालप्रबुद्धा समये जागरिता ॥ ४९ ॥

सीते ! तुम धन्य है जो अपने पति और पुत्रात्मक गर्भ में उत्तम राष्ट्रपतित्व निष्पन्न करने हेतु समय पर जाग गई और जिसने अपना राज्य छोड़कर वन में स्वेच्छया तप किया ॥ ४९ ॥

**रामाधिकौ रामसुतौ, न शङ्का, गतो वनं राम उदूढभार्यः ।**
**इमौ तु गर्भाद्धि विदेहपुत्र्याऽनयैव सार्धं तपसां वनानि ॥**

इसमें सन्देह नहीं कि राम के पुत्र राम से बड़े हैं, सीता के साथ राम तो बन गए थे विवाह के बाद, ये गर्भावस्था से बन जा पहुँचे, किन्तु तपोवन, न कि साधरण वन, और सीता जी के हो साथ ॥ ५० ॥

**किं नाम हेमात्र तुलाविधाने विनाग्निसंस्कारमिमौ विशुद्धौ ।**
**आस्तथ्यमेतद् यदियं पुरैव वह्नौ विशुद्धास्त्यनयोः सवित्री ॥**

हेम कौन होता है इनकी समता प्राप्त करने में ? ये तो अग्निसंस्कार के विना ही विशुद्ध हैं। आः, यह सर्वथा सत्य है कि ऐसे इन बच्चों की माता अग्नि में पहले ही विशुद्ध ठहर चुकी है ॥ ५१ ॥

**हन्त प्रजाराधनतत्परत्वे रामं प्रभुं कोऽतिशयीत लोके ।**
**यस्तत्कृते गर्भत एव सत्त्वरूपां प्रजां स्वां विनयत्यदभ्रम् ॥**

**संकेतः**—'प्रजा स्यात् सन्ततौ जने' इत्यमरः ॥ ५२ ॥

हन्त, प्रजाराधान की तत्परता में, संसार में कौन लांघ सकता है प्रभु राम को, जो इस ( प्रजाराधन ) के लिए अपने अंशरूपी प्रजा को गर्भकाल से ही इस प्रकार शिक्षित करते हैं ॥ ५२ ॥

**सुदक्षिणायां रघुरेव, तद्वच्छकुन्तलायां भरतो हि जज्ञे ।**
**अस्यामिमौ द्वौ, ननु हेतुरत्र द्वयोस्तपो मातुरथो पितुश्च ॥**

**संकेतः**—सुदक्षिणा दिलीपभार्या। तत्र रघोः संभवे पितृतपःप्राधान्यम्। शकुन्तला दुष्यन्तपत्नी, तत्र भरतस्य संभवे शकुन्तलातपःप्राधान्यम्। कुशलवयोः संभवे पुनर्द्वयोरेव, रामस्यापि सीतायाश्चापि। तपोद्वयप्राधान्यादेव पुत्रद्वयसंभवः ॥ ५३ ॥

सुदक्षिणा से केवल एक रघु हुए और शकुन्तला से भी केवल एक भरत। सीता से हुए ये दो। निश्चित ही इनकी प्राप्ति में दोनों के ही तप कारण हैं—पिता के भी और माता के भी ॥ ५३ ॥

**सा कूटनीतिर्ननु राममातुः सीता-प्रवादो यदभूत् स मिथ्या ।**
**सा यौवने नैव चकाङ्क्ष भूयः पौत्रेषु संस्कारकृते तपांसि ॥**

**संकेतः**—राममाता कौसल्या। स सीताया लङ्काधिवासकालुष्यविषयकः। रामो संस्काराय यौवने तपांसि चक्रे ततो राष्ट्रपतित्वमवापत्। पौत्रा जन्मत एव संस्कृताः स्युरिति कौसल्याहृदयभावना ॥ ५४ ॥

लगता है—वह कौसल्या की कूटनीति थी जो सीता के विषय में वैसी झूठी

अफवाह फैली। पौत्रों के संस्कार के लिए उस (कौसल्या) ने यौवनकाल आ जाने पर तप किया जाना उचित नहीं माना ॥ ५४ ॥

**सा नैव रामस्य च लक्ष्मणस्य प्रसूतिभेदं रुरुचे ततश्च।**
**एकप्रसूति द्वयमत्र सून्वोरिदं स्ववध्वां निपुणा विलेभे ॥**

उस (कौसल्या) ने यह भी पसंद नहीं किया कि राम और लक्ष्मण दो अलग-अलग कुक्षिओं से जन्म लें। इसलिए इसने ऐसी चतुराई की कि एक ही माता से इन दोनों को प्राप्त किया ॥ ५५ ॥ प्रसूतिभेदो मातृभेदः। एकप्रसूति एकमातृकम्।

**इत्येवमादि - प्रतिपत्तिमग्नो बभूव लोको हृदये तदानीम्।**
**गुणाय सर्वोऽपि जनः प्रणौति द्रुह्यत्यसौ यद्यपि तत्प्रसूत्यै ॥**

लोगों में ऐसे विचार अब उठे, क्योंकि, गुणवान् हो जाने पर सभी प्रणाम करते हैं, यद्यपि गुणार्जन में वे ही द्रोह भी करते हैं ॥ ५६ ॥

**सा संविदेतस्य सभाजनस्य द्राग् वैखरीभूय वियद्वितानम्।**
**प्रपूर्य तं लक्ष्मणसूनुपक्षं समर्थयामास ममत्वमुग्धम् ॥**

**संकेतः**—लक्ष्मणसूनुश्चन्द्रकेतुः तस्य पक्षं मातुरपरित्यागरूपम् ॥५७॥

सभासदों की यह बुद्धि वैखरी बन गई और उसने आकाश के वितान को भरकर चन्द्रकेतु के उस ममत्व से मुग्ध पक्ष का ही समर्थन किया और कहा—॥५७॥

**मातः प्रसीद कुरु कैरवसोदरं नः**
**साकेतकं पदनखेन्दुमयूखहृष्टम्।**
**एते वयं मधुकरायितुमत्र यस्मात्**
**सम्यक् क्षमेमहि चिरात् प्रभृति प्रतृष्णाः ॥**

माता कृपा करो, और हमारे कुमुद जैसे तुच्छ साकेत को अपने चरणों की नखेन्दुकिरणों से खिला दो, जिससे चिर सतृष्ण हम मधुकर बन सकें ॥ ५८ ॥

**घूकस्वरैर्निबिडितेऽपि कुहूसुहृद्भिः**
**किं व्योम्नि हंसमधुराऽऽसजते न राका।**
**कालक्रमेण परिवर्त्तनमश्नुवाने**
**चक्रात्मके जगति वत्सलतैव नेमिः ॥**

**संकेतः**—घूका उलूकाः। हंसमधुरा हंसैर्मधुरा हंसेभ्यो मधुरा चेति ॥ ५९ ॥

अमावस के प्रेमी उलूकों के स्वर से भरे आकाश में क्या पूर्णिमा प्रेम नहीं करती। कालवशात् घूम रहे इस विश्वचक्र में एकमात्र वात्सल्य ही होती है नेमि ॥५९॥

**कविरिमामुपकर्ण्य सरस्वतीमतितरां विशदोऽभवदात्मनि ।**
**अनुशयः कलुषस्य विनिष्क्रयः सुजनताऽजन-तापरुचिश्च यत्॥**

जनता की वाणी को सुनकर, कवि की अन्तरात्मा का अनुशोच ( दुःख ) दूर हो गया । पश्चात्ताप से कालुष्य धुल जाता है और जो सुजन होते हैं उनकी रुचि किसी भी व्यक्ति को संताप पहुँचाने की नहीं हुआ करती ॥ ६० ॥

**स जनको जनकोपपराङ्मुखो दुहितरं हितरञ्जित-भूतलाम् ।**
**जन-मनो नमनोदितपुण्यतामृतमथैक्ष्य बभूव कृतक्रियः ॥**

जनता पर कोप न करने वाले जनक भी अब कृतकृत्य हो गए, हित करके संपूर्ण भूतल को प्रसन्न कर चुकी अपनी पुत्री के प्रति जनता के मन को प्रणाम के कारण पवित्रतारूपी अमृत से युक्त देखकर ॥ ६१ ॥

**स रविवंशगुरुश्च सनातन-स्थविरतां विरतामिव तत्क्षणम् ।**
**न मनुते स्म न, किं च सतीव्रतं तपसि काञ्चन काञ्चनतां गतम्॥**

संकेतः—सनातनस्य धर्मस्य स्थविरता शिथिलता ॥६२॥

रविवंश के गुरु वसिष्ठ भी उस क्षण सनातन धर्म की स्थविरता को समाप्त-तुल्य मान रहे थे और मान रहे थे सतीव्रत की तपरूपी अग्नि में तपकर किसी अलौकिक काञ्चनता को प्राप्त ॥ ६२ ॥

**स नृपतिश्च पतिश्च सतां चितेरुपचितां रतिमेक्ष्य शुभग्रहे ।**
**जनपदेषु पदेषु च नागरेष्वमनुत ज्वलितामसतां चिताम् ॥**

वे सज्जन-प्रतिपालक और राजा राम भी यह देखकर कि सज्जनों की चेतना शुभाग्रह के प्रति स्नेहभरित है यह मानने लगे कि अब ग्रामों और शहरों में असत् पुरुषों की चिता धधक चुकी है ॥ ६३ ॥

**कुश-लव-प्रसवा तु निशम्य ता जनगिरो निजकीर्तिपरा अपि ।**
**समतया मतया विदुषां दधे श्रुतिमतीति मतीन्दुकलां शुभाम् ॥**

संकेतः—विदुषां मतया अभिमतया समतया समत्वेन श्रुतिमती विदुषी इति हेतोः शुभां मतिमेव इन्दुकलां दधे ॥ ६४ ॥

किन्तु सीता जनता द्वारा उच्चरित अपनी प्रशंसा के वचन सुनकर भी इन्दु-

कला सी अतीव शुभ मति लिए रहीं ( उसमें गर्व नहीं जागा ), वे तो ब्रह्मविद्वरिष्ठों को अभिमत समभाव में जो प्रतिष्ठित थीं ।। ६४ ।।

**तस्मिन् काले पतिपित्रादेः सान्निध्यं**
**सूरेराद्यस्याश्रमतुल्यामथ भूमिम् ।**
**दृष्ट्वा, शिष्टं कृत्यमदृष्ट्वा स्वं चान्यत्**
**स्थूलं देहं स्वस्यै मात्रेऽदित्सत् सा ।।**

उस समय सीता ने यह देखकर कि 'पति पिता आदि सब उपस्थित हैं, स्थान भी बड़ा ही उत्तम है वाल्मीकिजी का आश्रम, और जीवन का भी कोई कृत्य बच नहीं रहा है' अपना स्थूल देह अपनी माता ( भूमी-भूगर्भ ) का लौटा देना चाहा ।।६५।।

मत्तमयूरं वृत्तम् । स्वस्यै मात्रे पृथिव्यै अदित्सत् दातुमैच्छत् ।।

**सा सर्वेभ्यो विनयमधुरं चाञ्जलिं मूर्ध्नि धृत्वा**
**न्यस्याशीर्भिः करकिसलयं चन्द्रकेतोश्च शीर्षे ।**
**स्मेरं धृत्वा मुखसरसिजं शान्तभावा पुनश्च**
**भेजेऽभ्यासात् स्थिरसुखसमां पद्ममुद्रां सुभद्राम् ।।**

संकेतः—स्थिरसुखमासनमिति योगिनः । सुभद्राम् शोभना भद्रा भद्रासनं यस्यां ताम् । पद्मासनं हि भद्रासनं विना न सिद्ध्यति ।। ६६ ।।

और उनने सबके लिए विनयमधुर अञ्जलि सिर पर धारण की, आशीर्वादों के साथ चन्द्रकेतु के माथे पर हाथ रखा, और मुसकुराते हुए शान्त चित्त से स्थिर, सुखद, सम तथा भद्रासन से शुद्ध पद्मासन पुनः लगा ली ।। ६६ ।।

**अक्ष्णोः प्रान्ताद् दरविदलितात् कैरवात् कैसरं नु**
**नासावंशं स्नपयितुमिव प्रांशुरश्मिप्रतानः ।**
**जिह्वामूलादुपरि कुहरं किं च पीयूषधारां**
**धातुं तस्या अचलरसनाकोटिरेतुं प्रवृत्ते ।।**

संकेतः—केसराणां समूहः कैसरम् । जिह्वामूलेति स्थिरां खेचरीमाह ।। ६७ ।।

उस समय सीताजी किंचित् खुली आँखों से कुमुद से उसकी केसरों ( धागों ) जैसी सुन्दर लम्बी किरणें उनकी उन्नत नासिका को नहलाने हेतु दौड़ने लगीं और किसी पीयूषधारा का पान करने हेतु जिह्वा का निश्चल अग्रभाग भी जिह्वामूल के ऊपर के रन्ध्र में पहुंचने लगा ।। ६७ ।।

**शब्दादिभ्यस्तदनु करणग्राम आसाद्य मोक्षं**
**तस्या आत्मन्यमृतजलधौ बिन्दुभावेन मग्नः ।**
**प्राणायामः स्वयमथ तदा प्राणरोधस्वरूपः**
**प्रादुर्भूतः सहजसुभगो ध्यानदार्ढ्यं दुहानः ।।**

**संकेतः**—करणग्राम इन्द्रियग्रामः । सिन्धुबिन्दूपमया मायाब्रह्मणोरभेदः । प्राणायामः प्राणनिरोधरूपः । स च 'ईश्वरप्रणिधानाद् वा' इत्यादिभिः प्रतीतः ।। ६८ ।।

तब उनकी इन्द्रियोंने शब्द आदि ( विषयों ) से मोक्ष प्राप्त कर लिया और वे आत्मरूपी अमृत सिन्धु में बिन्दु जा बनीं । अतः प्राणरोधरूप प्राणायाम उन्हें अपने आप लग गया और उससे उनका ध्यान दृढ हुआ ।।६८।।

**आनन्दं सा यमिह पुरतो भर्तृपुत्रादिकार्ये-**
**ष्वन्तं लब्ध्वाऽलभत महती लोकभूमौ क्षणेऽस्मिन् ।**
**तस्यैवात्र प्रतिकृतितनुं कञ्चिदानन्दसिन्धुं**
**कैवल्याढ्यं प्रशममहितं स्वात्मभूमावलब्ध ।।**

उस महान् सीता ने पति पुत्र आदि के प्रति अपने कर्तव्य के पालन से लोकभूमि पर जो सुख अभी कुछ पहले प्राप्त किया था उसी की प्रतिकृति सा, किन्तु, कैवल्य से समृद्ध और प्रशम से श्रेष्ठ कोई ( अलौकिक ) आनन्दसिन्धु उसने अपनी आत्मा की भूमिका पर प्राप्त किया ।। ६९ ।।

**इत्थं सैषा जनकतनया स्वात्मदेवस्वरूपं**
**ज्योतिष्कायं कमपि मुदिता राममासाद्य जाता ।**
**का भीरस्मिन् विरहजनिता, का च लोकप्रसूता**
**सत्त्वासत्त्वप्रथितिरबला, का च कालव्यपेक्षा ।।**

और इस प्रकार जनक जी की यह यशस्वी पुत्री ( सीता जी ) आत्मदेवस्वरूप अत एव केवल ज्योतिष्काय और किसी लोकोत्तर राम को पाकर परम प्रसन्न हो गई । इस राम के साथ कैसा तो विरह का भय, कैसा सतीत्व और असतीत्व का लौकिक जनवाद और कैसी अवसरप्रतीक्षा ।। ७० ।।

स्थितावस्यामेषा स्थितिमलभतोत्थानरहितां
यतो 'युक्तो योगी' व्युपरतसमाधिच्युतिरभूत् ।
अगात् साधारण्यं तदनु तिसृषु व्यक्तिषु परं
नरो नारी क्लीबं क्व नु दधति भेदं रसलये ।।

**संकेतः**—काव्यरसलयेपि सहृदयो जनः साधारण्यं लभते ।। ७१ ।।

इस स्थिति में सीता उत्थान ( पुनः जागरण ) से परे की स्थिति में स्थिर होकर युक्त योगी बन गई जिसकी समाधि कभी भी टूटती ही नहीं। तब इनके लिए तीनों व्यक्ति ( स्त्री, पुरुष और क्लीब ) समान हो गए। रसलीनता की स्थिति में नर, नारी और क्लीब की भिन्नता रहती ही कहाँ ।। ७१ ।।

वसिष्ठो वाल्मीकिर्जनक इतरे चापि मुनय-
स्तदीयां तां दृष्ट्वा स्थितिमधिगतार्थाः कथमपि ।
पुनर्भूर्जैस्तस्या व्यधिषत वृतिं किं च कतिचित्
प्रतीक्ष्याहोरात्रान् प्रणिजगदुरार्त्तान् निजजनान् ।।

वसिष्ठ, वाल्मीकि, जनक और अन्य सभी मुनिजनों ने सीताजी की वह स्थिति देखी तो वे किसी भी प्रकार वास्तविकता जान गए। उन्होंने भूर्जपत्रों का घेरा फिर से करवा दिया और कुछ दिन प्रतीक्षा कर आतुर सम्बन्धियों से कहा—।।७२।।

अलं शोकावेगैरलमतितरां मोहकलुषै-
रलं स्वाधिक्षेपैरथ च पुनरुत्थानयतनैः ।
इयं कल्याणी तां गतिमुपगता यां स्पृहयते
मुनीन्द्राणामात्मा शतशततपोऽनुष्ठितिपरः ।।

अब शोक और आवेग छोड़िए, मोहकलुषित आत्मधिक्कार भी छोड़िए और छोड़िए फिर से जगाने के [ यतन = यती ल्युट् ] यत्न। यह कल्याणी उस गति को प्राप्त हो गई है जिसे मुनीन्द्रों की आत्मा चाहती हैं और जिसके लिए सैंकड़ों-सैंकड़ों तपोऽनुष्ठान करती है ।। ७३ ।।

प्रतिष्ठेयं जाता निमि-रवि-महावंशयशसां
प्रतिष्ठेयं जाता युगयुगकृते भारत-भुवः ।
प्रतिष्ठेयं जाता श्रुतिमहति मार्गे कृतधियां
यदेषा देहेन स्थितिमधित मृत्युञ्जयभुवः ।।

**संकेतः**—श्रुतिमहान् मार्गः सनातनधर्मः । देहेन स्थूलेन शरीरेण । मृत्युञ्जय-भूः अमृतत्वभूमिका । स्थूलदेहेऽप्यमृतत्वमेव भारतीया सिद्धिः ॥ ७४ ॥

यह निमि और रवि दोनों के महान् वंशों के यश की प्रतिष्ठा सिद्ध हुई, और यह प्रतिष्ठा सिद्ध हुई युग युग के लिए भारतभूमिकी, यह प्रतिष्ठा सिद्ध हुई कृतधी महामुनियों के श्रुतिमहान् मार्ग ( सनातन धर्म ) की कि यह स्थूल शरीर से मृत्युञ्जय-भूमिका की स्थिति में जा पहुँची ॥ ७४ ॥

**संप्रत्यस्याः पशुपतितया पाशमुक्तोऽन्तरात्मा**
**वन्द्योऽस्माकं भवति जहित स्थूलदेहान्ववायम् ।**
**धन्यो रामः कुशलवसुता यस्य जाया त्रिलोकी-**
**माङ्गल्यात्मा व्रजति वपुषैवान्धकारात् परस्तात् ॥**

अब इसका अन्तरात्मा समस्त पाशोंसे मुक्त हो चुका है और वह पशुपति बन चुका है। हमें उसको प्रणाम करना चाहिए। अब स्थूलशरीर के सम्बन्धों की बात छोड़िए। धन्य हैं राम, जिनकी जाया कुशलव जैसे पुत्र देकर त्रैलोक्य का मंगल बन गई और स्थूल शरीर से ही अन्धकार के पार जा पहुँची ॥ ७५ ॥

**इत्येवं ते बहुविधवचःसेतुबन्धैः समेषा-**
**मस्रस्रोतः स्थगयितुमलंभूष्णुतामीप्सवोऽपि ।**
**शेकुर्नैव, द्रुतिमुपगतां चेतनामक्षिमार्गा-**
**न्निर्गच्छन्तीं प्रति तितउतां याति वै सान्त्वनावाक् ॥**

इस प्रकार उन महामुनियों ने अनेक प्रकार के सान्त्वनावचनों द्वारा उन सब सम्बन्धियों के अश्रुप्रवाह पर सेतु बाँधने का प्रयत्न तो किया, परन्तु वे सफल न हो सके। बात यह है कि जब चेतना द्रुत हो उठती और नेत्रमार्ग से फूट पड़ती है तो सान्त्वनावाक् उसमें चलनी ही सिद्ध होती है ॥ ७६ ॥

**गाङ्गैस्तोयैरथ नयनजैस्तैर्विमिश्रैः पवित्रं**
**श्रद्धापुष्पैः शबलशबलं खातमेते विधाय ।**
**तस्या गात्रं पुनरपि महीमातुरेवाङ्कशय्याऽऽ-**
**सीनं चक्रुर्, न हि मृतवपुर्मन्यते योगमुक्तः ॥**

अब इन सबने अपनी आँखों के जलों से मिश्रित गंगाजल से अत्यन्त पवित्र तथा श्रद्धा से मिश्रित पुष्पों से अत्यन्त शबलित गर्त ( गढा ) खोदा और उस माता ( साता ) के स्थूल शरीर को फिर से महीमाता की ही अङ्कशय्या पर आसीन कर दिया ( भूसमाधि दे दी ), क्योंकि योगमुक्त शरीर मृत नहीं माना जाता ॥ ७७ ॥

**सीता तस्मिन् स्वपिति पुनरप्यस्य विश्वस्य धर्म-**
**ग्लानि-ग्लान्यै श्रयितुमसकृद् देहबन्धं तमेव ।**
**इत्येवं सा मुनिजनसमित् पुत्रकान् सान्त्वयन्ती**
**त्यक्त्वा सास्रं पुनरपि सुमं प्राप तस्याः कुटीरम् ॥**

'सीता, उसमें सो रही है इस विश्व की धर्मग्लानि दूर करने हेतु इसी शरीर से यथासमय फिर से जाग उठने के लिए'—इन सब बातों से बच्चों को सान्त्वना दे रही मुनियों की वह सभा एक बार फिर से अश्रुपूरित पुष्पाञ्जलि अर्पित कर उस माता ( सीता ) के कुटीर पहुँची ॥ ७८ ॥

**तस्य द्वारे निहितशिरसा केन वा नाश्रु मुक्तं**
**को वा नासीद्धृदयविपिने दावलग्नोऽत्र धीरः !**
**कैर्वा मृत्स्नां शतशतमहातीर्थमृत्स्नामिवास्य**
**धृत्वा मूर्ध्नि स्वजनुरिदमाः प्रापितं धन्यतां नो ॥**

उसके दरवाजे पर सिर रखकर किसने आँसू नहीं बहाए, उस समय किस धीर के हृदय-विपिन में दवाग्नि सी नहीं धधकी और उसकी शत शत महातीर्थों की मिट्टी सी पवित्र मिट्टी माथे में लगा किसने अपना जीवन धन्य नहीं किया ॥ ७९ ॥

**को वा वक्तुं प्रभवतु जगन्मातुरस्या यशांसि**
**केनावाप्तं मनुजवपुषि क्रान्तिमच्चक्षुरार्षम् ।**
**अस्याः पुण्यस्मरणसुधया पूरयेत्, पूरितुं चेद्**
**वाञ्छेत् कश्चित् स्वमतिसरित विश्वधन्वप्रलुप्ताम् ॥**

इस जगन्माता के यशों का गान भला कौन कर सकता है। मनुष्य जन्म में क्रान्तदर्शी आर्षदृष्टि भला किसने पायी है। हाँ, उसके पुण्यस्मरण की सुधा से कोई चाहे तो विश्वमरुस्थल में लुप्त बुद्धिसरिता को भर ले ॥ ८० ॥

**तस्यास्तस्मिन् प्ररुदितमृगे यद्धि शान्ते कुटीरे**
**काव्यं किंचित् स्वकरलिखितं राघवेणापि पुण्यम् ।**
**तस्यैकांशे चिरपरिचितेऽप्यपर्यन्नर्थजाती-**
**र्नूत्नाः 'सीताचरित'–विरुदोऽसौ कृती, सर्गबन्धः ॥**

उस माता ( सीता ) के उस प्ररुदित मृग आश्रम में उसी माता के द्वारा अपने हाथों लिखा गया जो एक काव्य भगवान् राम ने पाया था उसी के एक किसी

चिरपरिचित अंश में उसी माता की कृपा से अर्थों की नवीन जातियाँ अर्पित कर रहा यह बन्ध सफल है ॥८१॥

**मातुस्ताभ्यां पदसरसिजाभ्यां कृतिर्मेऽर्पितेयं**
**यन्माध्वीकं व्रजति लिपितां विश्व-काव्य-प्रबन्धे ।**
**अर्थत्रैधं दलपरिमलोल्लासिनी केसरश्री-**
**र्धत्ते यत्र, श्रयति पदतां किंच सा हंसकोक्तिः ॥**

**संकेतः**—माध्वीकं मकरन्दः, तल्लिखितत्वात् विश्वकाव्यप्रबन्धस्य सुन्दरत्वं मधुरत्वञ्च, अर्थत्रैधं वाच्य-लक्ष्य-व्यङ्ग्य-रूपम्, तत्र केसरा लक्ष्यप्रतीकाः, दलानि वाच्यस्य, परिमलश्च व्यङ्ग्यस्य । लक्ष्यस्य मध्यवर्तित्वात् केसराणामिव तदितरद्वय-युक्तताऽत्रोक्ता । विश्वपक्षेऽर्थत्रैधं सत्त्वादिगुणत्रयम् प्रातिभासिक-व्यावहारिक-पारमार्थिक-वस्तुजातं वा । चरणपक्षे दलेनाङ्गुलयः, केसरेण रेखाः, परिमलेन च सौरभमध्यव-सितानि । हंस एव हंसक इति कमलपक्षे, हंस इव हंसको नूपुर इति च चरणपक्षे । पदता गीतिमयता शब्दता च ॥८२॥ द्रष्टव्यं स्वतन्त्रसंभवे १.२ पद्यम्

मेरी यह कृति माता के किन्हीं उन कमलों को अर्पित है जिनकी मधुधारा इस विश्व-काव्य-प्रबन्ध में लिपि का काम करती है, जिनमें ( वाच्य, लक्ष्य और व्यङ्ग्य या सत्त्व, रजस्, तमस्, अथवा प्रातिभासिक, व्यावहारिक और पारमार्थिक ये ) तीनों अर्थ दलों की परिमल से उल्लासपूर्ण केसर का काम करते हैं और पद का काम करती है वह हंसकोक्ति (हंसक नूपुर, हंस परमहंस परिव्राजकों की उक्ति ) ॥८२॥

इति सनातनकवि-श्रीमद्रेवाप्रसादद्विवेदिकृतौ 'उत्तरसीताचरिते',
महाकाव्ये समाधिमाङ्गल्यं नाम
दशमः सर्गः ॥१०॥

॥ ॐ तत् सत् ॥